॥श्रीः॥

सनातनकविरेवाप्रसादद्विवेदिसंपादितं

महाकविकालिदासकृतम् अष्टमूर्त्तिमहाकाव्यम्

# ॥कुमारसंभवम्॥

•

## ॥प्रथमः सर्गः॥

ॐ अस्त्युत्तरस्यान्दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥१॥
यं सर्व्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥२॥
अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥३॥
यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥४॥
आमेखलं सञ्चरतां घनानां छायामधः—सानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते सानूनि यस्यातपवन्ति सिद्धाः ॥५॥
पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥६॥
न्यस्ताक्षरा धातुरसेन यत्र भूर्ज्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥७॥
यः पूरयन् कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम् ॥८॥
कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥९॥
वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥१०॥
उद्वेजयत्यङ्गुलिपार्ष्णिभागान् मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्त्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥११॥
दिवाकराद् रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥१२॥
लाङ्गूल—विक्षेप—विसर्पि—शोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति वालव्यजनैश्चमर्यः ॥१३॥

यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥१४॥
भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥१५॥
सप्तर्षिहस्तावचिताऽवशेषाण्यधो विवस्वान् परिवर्त्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥१६॥
यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥१७॥
स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥१८॥
कालक्रमेणाऽथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे ।
मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद् भूधरराजपत्न्याः ॥१९॥
असूत सा नागवधूपभो/योग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥२०॥
अथाऽवमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्व्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥२१॥
सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन सम्पत् ॥२२॥
प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥२३॥
तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥२४॥
दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान् विशेषाञ् ज्योत्स्नान्तराणीव कलान्तराणि ॥२५॥
तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।
उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥२६॥

---

१. वारि=तोय; वगाह्य=विगाह्य। 'चतुर्हस्तो भवेद् दण्डः' इति नाट्यशास्त्रे २.१६ भरतः। संवादाय द्र० शाकुन्तले ७.९.२ पृ० ६४२ कालिदासग्रन्थावली—२।

५. मधः=मिषे; गतां=गताः ना.।

६. विदन्ति=वदन्ति, विन्दन्ति।

७. योगम्=भोगम्; सुन्दरीणां=कामिनीनां।

८. स्थान=तान म.अ.ना.। स्थानमिति रामायणसंवादी पाठः।

९ विघ=संघ; प्रसूतः=समीरः व.; गन्धः=गन्धैः व.।

१०. गृहो=मुखो; निषक्त=विषक्त, निषिक्त; वामनस्य काव्यालङ्कारसूत्रवृत्तौ ४.३.२३।

१२. प्रपन्ने=प्रदिष्टे; सां सतीव=सामतीव।

१४. द्वार=द्वारि।

१६. वचिता=चरिता, पचिता। अतः परं पद्यम् —
तपोवनैस्तत्त्वदृशामृषीणां मध्ये मृगैः प्रस्रवणैश्च गाङ्गैः।
पुनाति लोकत्रितयं पृथिव्यां स्थितोऽप्ययं धर्म इवाद्रिरूपः॥

१७. भागं=भाग: अ.ना.

१९. वल्लभः, अरुणगिरिनाथः, नारायणः, चारित्र्यवर्धनश्च पद्यमिदं न पठन्ति। २०. भोग्यम्=योग्यम्; क्षता=व्रणा।

२१. अवमाने=अपमाने। २२. दपरि=दपि र, दिव ल।

२३. शङ्ख=तूर्य।

२४. दुहित्रा=धरित्री, जनित्री व.; विदूर=वैदूर्य; शब्दा=नादा।

२५. विशेषान्=अवयवान्। २६.तपसो=तपसे। आभिजनेन अभिजनः पर्व्वतः। पर्व्वतस्यापत्यं स्त्री पार्वतीति।

महीभृत: पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ।।२७।।
प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्ग: ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ।।२८।।
मन्दाकिनीसैकतवेदिकाभि: सा कन्दुकै: कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ।।२९।।
तां हंसमाला: शरदीव गङ्गां महौषधिं नक्तमिवात्मभास: ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्या: ।।३०।।
असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वय: प्रपेदे ।।३१।।
उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ।।३२।।

<u>नखशिखवर्णनम्</u>

अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद् रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ।।३३।।
सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुर—सिञ्जितानि ।।३४।।
वृत्तानुपूर्वे च, न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्न: ।।३५।।
नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषा: ।
लब्ध्वाऽपि लोके परिणाहि रूपं जातास्तदूर्व्वोरुपमानबाह्या: ।।३६।।
एतावता नन्वनुमेयशोभं काञ्चीगुणस्थानमनिन्दिताया: ।
आरोपितं यद् गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ।।३७।।
तस्या: प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवलोमराजि: ।
नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चि: ।।३८।।
मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ।।३९।।
अन्योन्यमुत्पीडयदुत्पलाक्ष्या: स्तनद्वयं पाण्डु तथा विवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ।।४०।।
शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्क: ।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशो मकरध्वजेन ।।४१।।
कण्ठस्य तस्या: स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभाव: ।।४२।।
चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मी: ।।४३।।
पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुच: स्मितस्य ।।४४।।
स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ।।४५।।
प्रवात—नीलोत्पल—निर्विशेषमधीर—विप्रेक्षितमायताक्ष्या ।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभि: ।।४६।।
तस्या शलाकाञ्जननिर्मितेव कान्तिर् भ्रुवोरायतलेखयोर्या ।
तां वीक्ष्य लीलाचतुरामनङ्ग: स्वचापसौन्दर्यमदं मुमोच ।।४७।।
लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्व्वतराजपुत्र्या: ।
तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्य्य: ।।४८।।
सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ।।४९।।
तां नारद: कामचर: कदाचित् कन्यां किल प्रेक्ष्य पितु: समीपे ।
समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ।।५०।।
गुरु: प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाष: ।
ऋते कृशानोर्नहि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ।।५१।।

---

२७. भृत: पुत्रवतोपीत्यस्य स्थाने भृतोऽपत्यवतोऽपीति महिमभट्टादृत: पाठ:। माला००संगा'='माला००संगा:', 'संघा:००संज्ञा:'। निर्वाणो दीप: अमाङ्गलिक:, अत एव न पवित्र:, ततश्च ज्वालैव तत्र माङ्गलिकी। चूलिकान्यायश्चात्र कृतपद:।

२९. पुत्रकैश्च=पुत्रिकाभि:; रसं=रसान् अ.ना.; बाल्ये=बाल्यम् व.। साऽथ=साधु।

३२. चतुरस्रपदे वामन: ५.२.५७। शोभि=शोभम् अ.ना.।

३३. अभ्यु=असं; निक्षे=विक्षे; पृथिव्यां=पृथिव्या:। अव्यवस्थामपरिच्छेदम्।

३४. ताङ्गी=तांसा अ.ना.; विक्रमे=विभ्रमे व.; प्रत्युपदेश=प्रत्युपकार; लुब्धै=लब्धै वपा.; सिञ्जि=शिञ्जि।

३५. लावण्य उत्पा=लावण्यमुत्पत्तु अ.ना.। आसपदे वामन: ५.२.२६।

३६. शैत्यात्=शैत्या:; लब्ध्वाऽपि=लब्ध्वा हि वपा.।

३७. शोभम्=कान्ति, रूपम्।

३८. तन्वी=नीला; लोम=रोम; राजि:=राजी। अत: परं पद्यान्तरम्—
गभीरनाभीहृदसन्निधाने रराज नीला नवरोमराजि:।
मुखेन्दुभीतस्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव।।

३९. बलि=बल; चारु=साधु:; यौवनेन=यौवनस्य अ.ना.; कामस्य=कामेन अ.ना., कालेन। यौवनेन कामस्य यौवनस्य कामेनेति योजनयोरद्यैवादरणीया, कामस्य सेव्यत्वमिव यौवनस्यैव सेवकत्वस्यौचित्यात्।

४०. पाण्डु=चारु:; तथा प्रवृद्धम्=तथा विवृद्धम्, बभार बाला। सूत्रान्तरमप्यलभ्यम्=सूत्रेण पदं न लब्धम्।
अत: परं पद्यान्तरम् —
निर्भर्त्सिताशोकदलप्रसूति पाणिद्वयं चारुनखं तदीयम्।
नवोदितेन्दुप्रतिमस्य शोभां व्योम्न: प्रदोषे विफलीचकार।।

४१. पुष्पा=माला:; वितर्क्क:=प्रतर्क्क:; पाशो=पाशौ व.म.अ.ना.। द्वौ मिलित्वा पाशत्वं भजत इति पाशपद एकवचनान्तत्वमेवोचितम्।

४२. तस्या: स्तनब=तस्यास्तनुब वपा.; निस्तलस्य=विस्तृतस्य, निस्तुलस्य व.म.अ.ना.।

४४. विशदस्य तस्या=विशदप्रभस्य

४५. तस्याम्=तस्या अ; प्रजल्पि=संजल्पि; पुष्टा=पुष्टा:,शब्दा:; ताड्यमाना=ताड्यमाना:, वाद्यमाना:।
अत: परं नवीनं पद्यद्वयम्—
कर्णद्वयस्थं नगराजपुत्र्यास्ताटङ्कयुग्मं सुतरां रराज ।
म/ज्ञात्वा भवित्रीं त्रिपुरारिपत्नीं तां सेवमानाविव पुष्पदन्तौ ।।
ताटङ्कयुग्मं विरराज तस्या: शैलात्मजाया: श्रवणद्वयस्थम्।
मत्वा भवित्रीं मदनारिपत्नीं सेवासमेताविव पुष्पदन्तौ ।।
पुष्पदन्तौ=सूर्याचन्द्रमसौ।

४६. क्ष्या=क्ष्या:; तया००भि:=तस्या: गृहीतं नु मृगाङ्गनाभि:।

४७. र्या=सा; तां=यां; चतुरा०=चिकुरा०, चितुरा०।

५१. तान्यवरा=तान्तरा।

अयाचितारं न हि देवदेवमद्रि: सुतां ग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥५२॥
यदैव पूर्व्वे जनने शरीरं सा दक्षरोषात् सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्ग: पति: पशूनामपरिग्रहोऽभूत् ॥५३॥
स कृत्तिवासास्तपसे यतात्मा गङ्गाप्रपातोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित्क्वणत्किन्नरमध्युवास ॥५४॥
गणा नमेरुप्रसवावतंसा भूर्ज्जत्वच: स्पर्शवतीर् वसाना: ।
मन:–शिलाविच्छुरिता निषेदु: शैलेयगन्धेषु शिलातलेषु ॥५५॥
तुषारसंघातशिला: खुराग्रै: समुल्लिखन् दर्पकल: ककुद्मान् ।
दृष्ट: कथञ्चिद् गवयैर्विविग्नैरसह्यसिंहध्वनिरुन्ननाद ॥५६॥
तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्त्ति: ।
स्वयं विधाता तपस: फलानां केनापि कामेन तपश्चचार ॥५७॥
अनर्घ्यमर्घेण तमद्रिनाथ: स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥५८॥
प्रत्यर्थिभूतामपि तां समाधे: शुश्रूषमाणां गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा: ॥५९॥

अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादै: ॥६०॥

इत्यष्टमूर्त्तिमहाकाव्ये कुमारसंभवे महाकविकालिदासकृतौ उमोत्पत्तिर्नाम प्रथम: पृथिवीमूर्त्तिसर्ग: ॥१॥

## ॥द्वितीय: सर्ग:॥

तस्मिन् विप्रकृता: काले तारकेण दिवौकस: ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययु: ॥१॥
तेषामाविरभूद् ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥२॥
अथ सर्व्वस्य धातारं ते सर्व्वे सर्व्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभि: प्रणिपत्योपतस्थिरे ॥३॥
नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टे: केवलात्मने ।
गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे ॥४॥

५२. न हि देवदेवमद्रि: सुतां ग्राहयितुं=नहि देवमद्रि: सुतां प्रतिग्राहयितुं; स्थ्य=स्थ।
५३. पूर्वे=पूर्वा व.म.अ.ना.; जनने=ज्वलने; स्वयमुत्ससर्ज=सुदती ससर्ज। अत्र विससर्जेति विवक्षायां ससर्जेत्युक्तिश्चिन्त्या। वामन: ५.२.६६। तदा=तत:।
५४. यता=जिता; पातो=वाहो; तोक्षित=तोत्थित; चित्क्वण=द्गृण।
५५. वसाना:=दधाना:; गन्धेषु=नद्धेषु। ५६. खुराग्रै:=हिमाद्रे:;
५७. तत्रा=अथा; आधाय=आदाय; समिद्धं=समृद्धं; कामेन=कालेन।
५८. अर्घेण=अर्घ्येण व.म.अ.ना.; समेतां=समग्रां अ.ना.।
५९. प्रत्यर्थि=प्रत्यर्थ। ६०. अवचित=अपचित

द्वितीय: सर्ग:
१. तुरसा=रुराषा।
४. 'स्त्रिमूर्त्तये'='ऽस्त्वमूर्त्तये'। व.म.अ.ना. त्रिमूर्त्तय इति पाठे

यदमोघमपामन्तरुप्तं बीजमज! त्वया ।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥५॥
तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेक: कारणतां गत: ॥६॥
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्त्ते: सिसृक्षया ।
प्रसूतिभाज: सर्गस्य तावेव पितरौ स्मृतौ ॥७॥
स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते ।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥८॥
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तक: ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वर: ॥९॥
आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥१०॥
द्रव: सङ्घातकठिन: स्थूल: सूक्ष्मो लघुर्गुरु: ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥११॥
उद्घात: प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्म्म यज्ञ: फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥१२॥
त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदु: ॥१३॥
त्वं पितृणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥१४॥
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वत: ।
वेद्यं च वेदिता चासि ध्येयं ध्याता च यत् परम् ॥१५॥
इति तेभ्य: स्तुती: श्रुत्वा यथार्था हृदयङ्गमा: ।
प्रसादाभिमुखो वेधा: प्रत्युवाच दिवौकस: ॥१६॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥१७॥

संवाद: कुस. ६.२३, ७.४४।
५. अत:=अद: अ.ना.; प्रभव:=प्रसव:, प्रभाव: अ.ना.; गीयसे=गीयते अ.ना.।
८. माणेन=णामेन व.म.अ.ना.; व्यस्त=व्यक्त; भिन्न; दिवस्य=दिनस्य; यौ तु स्वप्नावबोधौ=यौ स्वप्नबोधौ व, यौ तु सुप्तावबोधै, यौ तु स्वप्नावबोधौ तावेव भूतानां, भूतानां तावेव, यावेव स्वप्नबोधौ तौ अ.ना.व.;भूतानां=प्राणिनां।
९. जगदन्तो निरन्तक:=निरन्तो जगदन्तक:/जगतोऽन्तक: व., जगदन्तोऽप्यनन्तक: वना; जगदीशोनिरीश्वर:=जगदीशोऽप्यनीश्वर: म.अ.ना.व.।
११. लघुर्गुरु:=गुरुर्लघु: अ.ना.। अरुणगिरिनाथनारायणौ पद्यमिदं न पठत:।
१२. उद्घात:=उद्गीथ: व.अ.ना., उद्धृत:; रणम्=रितम्।
१३. त्वामेव=तामेव, तामाम।
१४. देवता=दैवतम् अ.ना.; वेधसाम्=वेदसाम्।
१५. भोज्यं=भोग्यं अ.ना.; शाश्वत:=शाश्वतम्; वेद्यं च वेदिता=त्वं वेद्यं वेदिता, वेद्यं वेदयिता, वेद्यश्च वेदिता; यत्=तत्। परम्='परम् ॥१॥कुलकम्॥'
१६. यथार्था=याथार्थ्या अ.ना.; वेधा:=ब्रह्मा।
१७. चतुर्मुख=वर्णस्थान। द्र० रघुवंशे १०.३६। ऋलृक्सूत्रे महाभाष्यम्;

स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य व: ।
युगपद् युगबाहुभ्य: प्राप्तेभ्य: प्राज्यविक्रमा: ।।१८।।
किमिति द्युतिमात्मीयां न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि व: ।।१९।।
प्रशमाद–र्चिषामेत–दनुद्गीर्ण–सुरायुधम् ।
वृत्रस्य हन्तु: कुलिशं कुण्ठिताश्रीव लक्ष्यते ।।२०।।
किञ्चायमरिदुर्वार: पाणौ पाश: प्रचेतस: ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रित: ।।२१।।
कुबेरस्य मन:–शल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुम: ।।२२।।
यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणाऽलातलाघवम् ।।२३।।
अमी च कथमादित्या: प्रतापक्षतिशीतला: ।
चित्रन्यस्ता इव गता: प्रकामालोकनीयताम् ।।२४।।
पर्य्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोध: प्रतीपगमनादिव ।।२५।।
आवर्जितजटामौलिविलम्बिशशिकोटय: ।
रुद्राणामपि मूर्धान: क्षतहुंकारशंसिन: ।।२६।।
लब्धप्रतिष्ठा: प्रथमं किं यूयं बलवत्तरै: ।
अपवादैरिवोत्सर्गा: कृतव्यावृत्तय: परै: ।।२७।।
तद् ब्रूत वत्सा: किमित: प्रार्थयध्वे समागता: ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ।।२८।।
ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण चोदयामास वासव: ।।२९।।
स द्विनेत्रो हरेश्चक्षु: सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ।।३०।।
एवं यदात्थ भगवानामृष्टं न: परै: पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो! ।।३१।।

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुर: ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थित: ।।३२।।
पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ।।३३।।
सर्व्वाभि: सर्व्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलामेकां हरचूडामणीकृताम् ।।३४।।
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ।।३५।।
पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्परा: ।
उद्यानपाल–सामान्य–मृतवस्तमुपासते ।।३६।।
तस्योपायनयोग्यानि रत्नानि सरितां पति: ।
कथमप्यम्भसामन्तरानिष्पत्ते: प्रतीक्षते ।।३७।।
ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजङ्गा: पर्युपासते ।।३८।।
तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितै: ।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणै: ।।३९।।
इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जन: ।।४०।।
तेनामरवधूहस्तै: सदयाऽऽलूनपल्लवा: ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमा: ।।४१।।
वीज्यते स हि संसुप्त: श्वाससाधारणानिलै: ।
चामरै: सुरबन्दीनां बाष्पसीकरवर्षिभि: ।।४२।।
उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरै: ।
आक्रीडपर्व्वतास्तेन कल्पिता: स्वेषु वेश्मसु ।।४३।।
मन्दाकिन्या: पय: शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम साम्प्रतम् ।।४४।।
भुवनालोकनप्रीति: स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात् पथि ।।४५।।
यज्वभि: संभृतं हव्यं विततेष्वध्वरेषु स: ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति न: ।।४६।।

---

प्रवृत्तिरासीच्छब्दानां=अभूत् प्रवृत्ति: शब्दानाम्।

१८. प्रभावै=प्रतापै। १९. प्रकाशानि=प्रसादानि व.अ.ना., प्रभावाणि।

२०. नुद्गू=नुद्गी। उद्गूर्णपदं महाभाष्यादागतम्। र्णसुरा=र्णासुरा।

२१. मरिदु=मपि दु; पाश:=प्रास:/श:।

२२. भग्न=भिन्न। रघुवंशे १०.७४।

२३. भूमिं=भूमौ। अस्मिन्निति दण्ड इत्यर्थ:।

२४. क्षति=क्षिति, क्षय अ.ना.; इव गता:=इवायाता:; लोकनीयताम्=लोकदर्शिन:; लोकदर्शनम्।

२६. क्षतहुंकार=क्षताहंकार व.म.अ.ना., क्षताहुङ्कार।
अत: परं पद्यम्–
निशाकरोऽपि मलिन: सुप्तोत्थितमिवाननम् ।
कलाशेषेऽपि या लक्ष्मी: सा पूर्णेऽपि न विद्यते।।

२७. 'किं यूयं बलवत्तरै:'='न खलु स्वबलोत्तरै:', 'न खलु स्वरणोत्तरै:'। २९. नेत्र=चक्षु:;चोदया=नोदया,प्रेरया व.ना.।

३०. द्विनेत्र:=द्विनेत्रं म.,विनेतृ अ., सहस्रनयनाधिकम्=दशचक्षु: शताधिकम् अ.ना., चतुक्षु.ईशशताधिकम्।

३१. यदात्थ=यथात्थ ; आमृष्टं=आकृष्टं, संमृष्टं, आदर्श/घृष्टं; ज्ञास्यसि प्रभो=ज्ञास्यति प्रभु: व., ज्ञास्यते प्रभु:।

३२. भवल्लब्ध=भवद्दत, त्वया दत्त व.अ.ना.; रोदीर्ण:=रोद्गूर्ण:। द्र. कुसं. २.२०। उपप्लवा=उपद्रवाय।

३३. स्य तनोति=स्यातनोति,स्य करोति: ना.; साध्यते=सिध्यति अ.ना.।

३४. सर्व्वदा=सर्व्वत:; मेकां=रेखां अ.ना.।

३५. व्यावृत्त=निवृत्त:; नेकुसुम=नकुसुम व.ना.; साध्वसात्=साहसात् अ.ना.। ३६. सामान्यम्=सामान्या:, ०नामान्या।

३७. प्रतीक्षते=प्रतीक्ष्यते, समीक्ष्यते। ३८. प्रमुखा=प्रहिता:।

३९. तं मुहुर्दूत=प्रत्यहं दूत, तं पुनर्दूत।

४०. शाम्येत्=काम्येत् ; प्रत्यप=प्रत्युप।

४१. स्तै: स=स्तस व.; छेद=छिन्न अ.ना., छद्म, सद्म।

४२. हि=च ; सुप्त:=तप्त:; वन्दीनां=वन्दीभि:।

४४. हेमाम्भोरुहस=हेमाम्बुरुहश अ.ना.।

४५. स्वर्गि=नाकि व.; नानुभूयते=नानुमीयते; खिलीभूते=खिले कृते, खिलीकृते अ.ना.; तदापात=तदाघात ना.; पथि=पदि।

४६. वितते=विहिते; मिषता=पिबता।

उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यश: ।। ४७।।
तस्मिन्नुपाया: सर्व्वे न: क्रूरे प्रतिहतक्रिया: ।
वीर्य्यवन्त्यौषधानीव विकारे सान्निपातिके ।। ४८।।
जयाशा यत्र चास्माकं प्रतीघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्क इवार्पित: ।। ४९।।
तदीयास्तोयदेष्वद्य पुष्करावर्त्तकादिषु ।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजा: ।। ५०।।
तदिच्छामो विभो! सृष्टं सेनान्यं तस्य शान्तये ।
कर्म्मबन्धच्छिदं धर्म्मं भवस्येव मुमुक्षव: ।। ५१।।
गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव सुरश्रियम् ।। ५२।।
वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभू: ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय या ।। ५३।।
संपत्स्यते व: कामोऽयं काल: कश्चित् प्रतीक्ष्यताम्।
न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ।। ५४।।
इत: स दैत्य: प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।। ५५।।
वृतं तेनेदमेव प्राङ् मया चास्मै प्रतिश्रुतम् ।
वरेणाऽशमितं लोकानलं दग्धुं हि तत्तप: ।। ५६।।
संयुगे सांयुगीनं तमुद्यतं प्रसहेत क: ।
अंशादृते निषिक्तस्य नीललोहितरेतस: ।। ५७।।
स हि देव: परं ज्योतिस् तम:पारे व्यवस्थितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ।। ५८।।

४७. बद्ध=बन्ध अ.ना.। ४८. सर्व्वे न:=न: सर्व्वे; पातिके=पातके।
४९. तोत्थिता=तोद्गता ना., तार्पिता, तोद्गता; कण्ठे=गले; निष्क=निष्कम् व.म.अ.ना.।
५०. देष्वद्य=ष्वेव; पुष्करा=पुष्कला अ.ना.; घातं=घातान् व.; वता=वणा: व.।
५१. इच्छामो=इच्छाम प्रार्थनायां लोट् व.; विभो=विभो:; सृऽटम् हामा. २११४=स्रष्टुम् अ.ना.म.। स्रष्टुमिति त्वपपाठ इति वल्लभ:। सृऽटमुद्युक्तमित्यर्थ:। तथाहि रघुवंश एव 'अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय सृऽट:। पुरा जनस्थानविमर्दशङ्की संधाय लङ्काधिपति:' प्रतस्थे।। धर्मम्=योगम् व.।
५२. सैन्या=सेना; यं=तं; सुर=जय।
५३. अवसिते=उपरते; तस्मिन्=तस्य अ.ना., त्वस्य, चास्य, या=सा।
५४. काल: कश्चित्=कश्चित् काल: व.; त्वस्य=तस्य,नास्य; सिद्धौ=सिद्धये; आत्मना=चात्मन:।
५६. वृतं=कृतं;तेनेदमेव प्राङ्=तेनेदमेवादौ, तेनेदमेवाहं; चास्मै=तस्मै; श्रुतम्=ष्ठितम्;णाऽशमितं=ण शमितं म., ण शमितुं ; लोकान्=लोकम्।
५७. सांयुगीनं=संमुखीनं अ.ना.; उद्यतम्=उद्गदम्, उद्यन्तम्; सहेत=हरेत; निषिक्तस्य=निषिक्तात् तु अ.ना., निषक्तस्य।
५८. व्यवस्थितम्=प्रतिष्ठितम्/त: व.; न च विष्णुना=नापि

उमारूपेण ते यूयं संयमस्तिमितं मन: ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ।। ५९।।
उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम ।। ६०।।
तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य व: ।
मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभि: ।। ६१।।
इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्त्तव्यास्तेऽपि प्रतिययुर्दिवम् ।। ६२।।
तत्र निश्चित्य कन्दर्पमगमत् पाकशासन: ।
मनसा कार्यसंसिद्धित्वराद्विगुणरंहसा ।। ६३।।
अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्र:
शतमखमुपतस्थे प्राञ्जलि: पुष्पकेतु: ।। ६४।।

इति अष्टमूर्तिमहाकाव्ये कुमारसम्भवे महाकविकालिदासकृतौ मदनागमनो नाम द्वितीयो जलमूर्त्तिसर्ग:।।२।।

•

## ।। तृतीय: सर्ग:।।

ॐ तस्मिन् मघोनस्त्रिदशान् विहाय सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनाऽपेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ।।१।।
स वासवेनासनसन्निकृष्टमितो निषीदेति विसृष्टभूमि: ।
भर्त्तु: प्रसादं प्रतिनन्द्य मूर्ध्ना वक्तुं मिथ: प्राक्रमतैवमेनम् ।। २।।
आज्ञापय ज्ञातिविशेष! पुंसां लोकेषु यत् ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया व: ।। ३।।
केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभि: ।
यावद् भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्त्ती ।। ४।।
असम्मत: कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात् प्रपन्न: ।
बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरै: कटाक्षै: ।। ५।।
सम्भावितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
कस्यार्थधर्म्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्ध: ।। ६।।

विष्णुना/वज्रिणा।
५९. ते यूयं=तेनास्य, यूयं ते; संयम=समाधि; मस्तिमितं=मावस्थितं।
६०. वोढु=सोढु व.; बीज=वीर्य व.अ.ना.; द्र. कुसं ३.१५–१६
६१. सैना=सेना;क्ष्यते सुर=क्ष्यति स्वर्ग व.; वेणीर्वीर्यविभूतिभि:=वेणीबन्धानदूषितान्।
६२. ते विबुधा अपि। प्रतिययुर्दिवम्=देवा दिवं ययु:,प्रति दिवं ययु:।
६३. कार्य=कर्म्म; सिद्धित्वरा=सिद्धयै त्वरा, सिद्धौत्वरा।
६४. स ललित=सुललित; शृङ्गं=शार्ङ्गं,भृङ्गं; पदाङ्के=पथाङ्के; मधुहस्त=मदहस्त; मख=मघ; पुष्पकेतु:=पुष्पधन्वा म.।

तृतीय: सर्ग:
६. संभावित=अध्यापित

कामेकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम् ।
नितम्बिनीमिच्छसि मुक्तलज्जं, कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥७॥
कयाऽसि कामिन् सरसाऽपराधः पादेनतः कोपनयाऽवधूतः ।
यस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥८॥
प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥९॥
तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥
अथोरुदेशादवतार्य पादमाक्रान्तिसंभावितपादपीठम् ।
संकल्पितेऽर्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥११॥
सर्वं सखे! त्वय्युपपन्नमेतद् द्वयं ममास्त्रं कुलिशं भवाँश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥१२॥
अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥१३॥
आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥१४॥
अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५॥
तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥१६॥
गुरोर्नियोगाच्च नरेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।
अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥१७॥
तद् गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१८॥
अस्मिन् सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।
अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म्म ॥१९॥
सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥२०॥
मधुश्च ते मन्मथ! साहचर्यादसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥२१॥
तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।
ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥२२॥
स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥२३॥
तस्मिन् वने संयमिनां मुनीनां तपः—समाधेः प्रतिकूलवर्त्ती ।
संकल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥२४॥
कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग् दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥२५॥
असूत सद्यः कुसुमान्यशोकः स्कन्धात् प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥२६॥
सद्यः—प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान् नामाक्षराणीव मनोभवस्य ॥२७॥
वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥२८॥
बालेन्दुवक्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥२९॥
लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं निवेश्य ।
रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलञ्चकार ॥३०॥
मृगाः प्रियालद्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः ।
मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥३१॥
चूताङ्कुरास्वादकषायकण्ठं पुंस्कोकिलो यन्मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥३२॥
हिमव्यपायाद् विशदाधराणामापाण्डरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥३३॥
तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां कथञ्चिदीशा मनसां बभूवुः ॥३४॥
तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥३५॥
मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णशारः ॥३६॥
ददौ रसात् पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्द्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥३७॥
गीतान्तरेषु श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे ॥३८॥
पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस् तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥३९॥
श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥४०॥
लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत् ॥४१॥
निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥४२॥

---

८. सरसा=सुरता म., सहसा अ.ना.; पराधः पा=पराधपा, पराद्धः पा; यस्याः=तस्याः म.।
१०. तवप्र=भवत्प्र व.; के=किं।
१३. व्या=आ; वेक्ष्य=वेत्य; अत्र कृष्णपदं विष्णवर्थे तथैव यथा रघुवंश ६.४९ पद्ये।
१४. मुच्चैर्द्विषा=मुच्चैस्तरा।
१६. निषेकभूमिः=निषिक्तभूमिः; भुवोपदिष्टम्=भुवा हि दिष्टम्।
१८. प्रत्ययमुत्तमं=प्रत्ययकारणम्।
२०. महो=मतो अ.ना.। २१. साह=साप।
२४. तपः=मनः।
२६. नापै=चापै।
२७. सद्यः=सख्युः; णीव=ण्येव।
२८. चेतः=चित्तम्।
३०. निवेश्य=प्रकाश्य म.अ.ना.।
३३. पत्र=चित्र।
३७. ददौ रसात् पङ्कज=ददौ सरःपङ्कज।
४०. भेद=भेदे, भङ्गे।
४१. वामप्रकोष्ठार्पितहेमवेत्रः=मुखाग्रसंस्थापिततर्जनीकः; नैषीत्=नैषत्।
४२. रम्भ=रण्यम् अ.ना., रघु. २.३१।

दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥४३॥

अथ सप्तभिः कुलकम्

स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।
आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥४४॥
पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं सन्नमितोभयांसम् ।
उत्तानपाणिद्वयसन्निवेशात् प्रफुल्लराजीवमिवाङ्कमध्ये ॥४५॥
भुजङ्गमोन्नद्धजटाकलापं करावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभासङ्गविशेषनीलां मृगत्वचं ग्रन्थिमतीं दधानम् ॥४६॥
किञ्चित्प्रकाशस्तिमितोग्रतारैर् भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर् लक्ष्यीकृतघ्राणमधोमयूखैः ॥४७॥
अवृष्टिसंरम्भ–मिवाम्बुवाह–मपामिवाधार–मनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥४८॥
कपालनेत्रान्तरलब्धमार्गैर् ज्योतिः–प्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥४९॥
मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥५०॥
स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत् साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥५१॥
निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥५२॥
अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥५३॥
आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
सुजातपुष्पस्तबकावनम्रा सञ्चारिणी पल्लविनी लतेव ॥५४॥
स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥५५॥

४३. दृष्टि=दृष्टेः; प्रपातं=प्रदीपं व., पतीपं म.अ.ना.व., प्रयातं, प्रयाणं।
४४. त्रियम्बकं=त्रैयम्बकं, तं त्र्यम्बकं, त्रिलोचनं।
४५. शात् प्रफुल्ल= शादुत्फुल्ल।
४६. मोन्नद्ध=मोद्बद्ध, माबद्ध; कराव=कर्णाव म.; वसक्त=वतंस; सङ्ग=भ्यङ्ग अ.ना., भिन्न, भ्यक्त व.; मृग=कृष्ण म.। कृष्णास्य कृष्णशारस्य। दधानम्=वसानम् व.।
४७. तोग्रतारैः=तान्यतारैः; विरत=विरसत् स्तिमित, स्थगित; प्रसङ्गैः=प्रसङ्गः, प्रचारैः; लक्ष्यी=लक्ष्मी व.।
४८. अवृष्टि=अवृष्ट; मनुत्तरङ्गम्=वाम्बुराशिम्; निवात=निर्वात।
४९. मार्गैः...रोहैरुदितैः=मार्गान्...रोहानुदितान् अ.ना.।
५०. नव=भव; क्षेत्र=ब्रह्म म.अ.ना.। ॥ ५०॥ कुलकम्, आदिकुलकम् आदिक्रियाकुलकम्।
५१. न्नदूरान्म=न्नदूरे म; मनसाप्यधृष्यम्=मनसोऽप्यदृश्यम्। अथ चतुर्भिः कुलकम्। ५२. वीर्यम्=बीजम्।
५३. आकृष्ट=आक्रुष्ट अ.ना.; सिन्दु=सिन्धु व.।
५४. सुजात=संजात व., पर्याप्त म.; पल्लविनी=पल्कविता अ.ना.।
५५. दवलम्बमाना=दवरो–प /ध/ह–यन्ती; दाम=पुष्प व.; द्वितीयमौ=मौर्वी द्विती म. इति तु महिम–मम्मट–भट्टौ।

सुगन्धिनिःश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥५६॥
तां वीक्ष्य सर्वावयवाऽनवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥५७॥
भविष्यतः पत्युरुमा च शम्भोः समाससाद प्रतिहारभूमिम् ।
योगात् स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥५८॥
ततो भुजङ्गाधिपतेः फणाग्रैरधः कथञ्चिद् धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥५९॥
तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्त्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥६०॥
तस्याः सखीभ्यां प्रणिपातपूर्व्वं स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥६१॥
उमाऽपि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥६२॥
अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम् ॥६३॥
कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद् वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥६४॥
अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥६५॥
प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६६॥
हरस्तु किञ्चित्परि–वृत्त/लुप्त–धैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोच/कनानि ॥६७॥
विवृण्वती शैलसुतापि भावमङ्गैः स्फुटद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥६८॥

५६. चरम्=चलम् व.; लोलदृष्टि=लोलनेत्रा। आदिकुलम्॥
५७. रतेरपि ह्री=रतेर् ह्रिया, रतेरपि ह्रीतिमिवा अ.ना.; जिते=यते व., यती; चापः=धन्वा, केतुः व.अ.ना.; स्वबाण=स्वकर्म्म व.अ.ना., स कर्म्म; शंसे=शंस व.अ.ना.। द्र. रघु १४.५०
५८. 'भविष्य...भोः'= उपासितुं सा च/साथ/सापि पिनाकपाणि व.; न्तः परमात्म=चान्तः परमार्थ, चान्तर्गत०, दृष्ट्वा चिरमा०।
५९. फणाग्रैः=फणाभिः; भागः=भागम् व.।
६०. प्रवे=निवे; मत=मित व.।
६१. पातपूर्वं=पत्य पूर्वं अ.ना., पत्य मूर्ध्नाः, लूनः=भूतः व.; मूले=पद्मे।
६२. नीला=लोलाः; कर्णच्युत=कर्णाच्युत।
६३. तथ्य=भव्य अ.ना. , सत्य; पुष्णन्ति=पुष्यन्ति व.; लोके=पाके व. अ.ना.।
६४. सरं प्रतीक्ष्य=सरं समीक्ष्य, सरप्रतीक्षः व.। सर्वत्रैव समक्षं हरेत्येव लेखः। अत्र बन्धनलक्षणान्यतरक्रियाविशेषणत्वमन्वीक्ष्यम्। मर्श=मर्षं।
६५. शोषिताम्=शेषिताम् व.अ.ना., लेषितं।
६६. प्रणयिप्रिय=प्रणयप्रिय; बाणम्=सायकम्। सायकपाठे चतुर्थे चरणे वंशस्थः।
६८. स्फुटद्=स्फुरद् व., कुचद् अ.ना.। कुच संकोचे। साचीकृता=साचिक्रिया, साविक्रिया।

अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद् बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥६९॥
स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्त्तुमभ्युद्यतमात्मयोनिम् ॥७०॥
तपः–परामर्शविवृद्धमन्योर् भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥७१॥
क्रोधं प्रभो! संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥७२॥
तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव ॥७३॥
तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।
स्त्रीसन्निकर्षं परिहर्त्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥७४॥

शैलात्मजाऽपि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥७५॥
सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद् वेगदीर्घीकृतात्मा ॥७६॥

इत्यष्टमूर्त्तिमहाकाव्ये कुमारसंभवे महाकविकालिदासकृतौ मदनदहनो नाम तृतीयस्तेजोमूर्त्तिसर्गः ॥३॥

•

## ॥ चतुर्थः सर्गः॥

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥१॥
अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥२॥
अयि जीवितनाथ! जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥३॥

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥४॥
उपमानमभूद् विलासिनां करणं यत् तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥५॥
क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥६॥
कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥७॥
स्मरसि स्मर! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युत–केसर–दूषितेक्षणान्यवतंसोत्पल–ताडनानि वा ॥८॥
हृदये वससीति मत्प्रियं यदवादीस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥९॥
परलोक–नव–प्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥१०॥
रजनी–तिमिराऽवगुण्ठिते पुरमार्गे घनशब्द–विक्लवाः ।
वसतिं प्रिय! कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥११॥
नयनान्यरुणानि घूर्णयन् वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥१२॥
अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग! मोक्ष्यति ॥१३॥
हरिताऽरुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥१४॥
अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम् ॥१५॥
प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥१६॥
शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहः स्मर! संस्मृत्य न शान्तिरस्ति मे ॥१७॥
रचितं रतिपण्डित! त्वया स्वयमङ्गेषु ममेदमार्त्तवम् ।
ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥१८॥
विबुधैरसि यस्य दारुणैरसमाप्ते परिकर्म्मणि स्मृतः ।
तदिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥१९॥

---

६९. यक्षोभ=याक्षोभ; ससर्ज दृष्टिम्=विसृज्य दृष्टिम्, विसृष्टदृष्टिः।
७०. निविष्ट=निषक्त; नतांस=नितान्त; पादम्=जानुम्; चक्री=वक्री; योनिम्=योनिः।
७२. क्रोधं=कोपं अ.ना.; प्रभो=विभो; शेषं=सानम्।
७३. तीव्राभि=तीव्राति; संस्तम्भयते=संभ्रमयती।
७४. वज्र=वज्रम्; भज्य=रुज्य अ.ना., दह्य; सन्नकर्षं=सन्निधानं; र्तुमिच्छन्=र्तुकामःसो वना।
७५. समर्थ्य=समीक्ष्य अ.ना.; सख्योः=सख्युः भवना=भुवना; मुखी=मुखं।
७६. पदि=अथ च, अथ स; पथ=पद; कृतात्मा=कृताङ्ग व.।

चतुर्थः सर्गः
१. विबोधिता=प्रबोधिता; प्रतिपाद=प्रतिबोध
२. अवधान=अपधान, अप/वदान; विलुप्त=निमग्न व., विमग्न, विलग्न, मनित्य
३. पुरः=पुनः; कृति=कृतिः अ.ना

४. विह्वला=विक्लवा; धूसरस्तनी=धूसराकृतिः
५. न विदीर्ये=न च दीर्ये अ.ना । ६. न्धनो=न्धनां ।
७. न च=च न
८. दूषितेक्षणा=दूषितेक्षिता; ताडना=ताडिता व.
९. वससि=वसती १०. पत्स्ये=पक्ष्ये ; सुखम्=मुखम् ।
११. विक्लवाः=विह्वलाः। १४. नव=वद
१५. कृत्ये=कृत्यैः; विरुतैः=विततैः व.; करुण=करुणैः; स्वनैः=स्वरैः व.अ.ना
१६. पुनरप्यादिश=परपुष्टा दिश; दूति=दूत अ.ना; कोकिलाम्=कोकिलान् व.म.अ.ना.; निसर्ग=विसर्ग व.; पण्डिताम्=पण्डितान् अ.ना
१७. नि च तानि=न्यपि तानि; ते=मे; रहः=पुरा।
१८. स्वयम्=नवम् अ.ना।
१९. रसि यस्य दारु=रपि यत् सुदारु अ.ना.; विबुधैस्त्वमनङ्ग दारु;परिकर्म=प्रतिकर्म।

अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरै: सुरकामिनीजनै: प्रिय! यावन्न विलोभ्यसे दिवि ॥२०॥
मदनेन विनाकृता रति: क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण! त्वामनुयामि यद्यपि ॥२१॥
क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्किंतां गतिमङ्गेन च जीवितेन च ॥२२॥
ऋजुतां नयत: स्मरामि ते शरमुत्सङ्गनिषण्णधन्वन: ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च तत् ॥२३॥
क्व नु ते हृदयङ्गम: सखा कुसुमायोजितकार्म्मुको मधु: ।
न खलूग्ररुषा पिनाकिना गमित: सोऽपि सुहृद्गतां गतिम् ॥२४॥
अथ तै: परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दित: ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत् पुर: ॥२५॥
तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दु:खमग्रतो विवृतद्वारमिवोपजायते ॥२६॥
इति चैनमुवाच दु:खिता सुहृद: पश्य वसन्त! किं स्थितम् ।
यदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥२७॥
अयि संप्रति देहि दर्शनं स्मर! पर्युत्सुक एष माधव: ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥२८॥
अमुना खलु पार्श्ववर्त्तिना जगदाज्ञां ससुरासुरं तव ।
बिसतन्तुगुणस्य कारितं धनुष: पेलवपुष्पपत्त्रिण: ॥२९॥
गत एव न ते निवर्त्तते स सखा दीप इवानिलाहत: ।
अहमस्य दशेव पश्य मामविषह्यव्यसनप्रधूमिताम् ॥३०॥
विधिना कृतमर्द्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनघापि हि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥३१॥
तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥३२॥

---

२०. अहमेत्य=इयमेत्य अ.ना.,पुनरङ्का=पुररुक्ता; विलोभ्यसे=विलुभ्यसे, विलुप्यसे

२१. विनाकृता=विना कथं, विना क्षता, विना क्षिता

२२. क्रियतां=क्रियते, ध्रियते; अन्त्य=अन्त, अद्य; कान्तरितस्य=कन्त्वरितस्य अ.ना.; सममेव=स्वयमेव; स्यतर्किंतां=स्म्यतर्किंतां; गतिमङ्गेन=स्वशरीरेण

२३. नयत:=नमसि: निषण्ण=निषक्त, निषिक्त, निषङ्ग; धन्वन:= धन्विन:;सस्मितां कथां=सस्मिता: कथा:; विलोकितं च तत्=विलोकितानि च, विलोचनानि च, विलोकनानि च, विलोकनं च तत्।

२५. देविता=देवना , देवता; शरै=फलै व.अ.ना.; र्दित:=हत: म., र्पित: अ.ना.;भ्युपपत्तु=भ्यवपत्तु अ.; मधु=ऋतु व.; पुर:=कृती

२६. रुरोद सा भृशं=भृशं रुरोद सा; स्तन=गुरु।

२७. सुहृद:=सुहृदं अ.ना.; सुहृद: पश्य वसन्त किं=सुहृदं पश्यसि किं मधो; यदि=तदि; विकीर्यते=प्रकीर्यते अ.ना.म.; कर्बुरम्=पाण्डरम्।

२८. दयिता=प्रमदा। २९. पेलव=पेशल, कोमल अ.ना.म.।

३०. नप्रधूमिताम्=सनप्रदीपिताम् व., सनप्रदूषिताम्, सनेन धूमिताम् म.वना.।

३१. अर्द्ध=अर्थ, अन्त्य; वधे=पथे; अनघापि हि=अनपायिनि म.अ.ना., अहतापि हि; संश्रयद्रुमे=संश्रितद्रुमे, संश्रिता द्रुमे व.म.अ.ना.।

३२. ननु=अनु: अ.ना., पत्यु=भर्त्तु

शशिना सह याति कौमुदी सह मेघेन तडित् प्रलीयते ।
प्रमदा: पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥३३॥
अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥३४॥
कुसुमास्तरणे सहायतां बहुश: सौम्य! गतस्त्वमावयो: ।
कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥३५॥
तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनै: ।
विदितं खलु ते यथा स्मर: क्षणमप्युत्सहते न मां विना ॥३६॥
इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र यं मया सहित: पास्यति ते स बान्धव: ॥३७॥
परलोकविधौ च माधव! स्मरमुद्दिश्य विलोलपल्लवा: ।
निवपे: सहकारमञ्जरी: प्रियचूतप्रसवो हि ते सखा ॥३८॥
इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पत ॥३९॥
कुसुमायुधपत्नि! दुर्लभस्तव भर्त्ता न चिराद् भविष्यति ।
शृणु येन स कर्म्मणा गत: शलभत्वं हरलोचनार्चिषि ॥४०॥
अभिलाषमुदीरितेन्द्रिय: स्वसुतायामकरोत् प्रजापति: ।
अथ तेन निगृह्य विक्रियामभिशप्त: फलमेतदन्वभूत् ॥४१॥
परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हर: ।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन स योजयिष्यति ॥४२॥
इति चाह स धर्म्मयाचित: स्मरशापावधिदां सरस्वतीम् ।
अशनेरमृतस्य चोभये वशिनश्चाम्बुधराश्च योनय: ॥४३॥
तदिदं परिरक्ष शोभने भवितव्यप्रियसङ्गमं वपु: ।
रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥४४॥
इत्थं रते: किमपि भूतमदृश्यरूपं मन्दीचकार मरणव्यव सायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनामाश्वासयत् सुचरितार्थपदैर्वचोभि:.॥४५॥

---

३३. प्रलीयते=विलीयते: विचेतनैरपि=हि चिरं मनोहरै:, हि पृथग् जनैरपि, हि पृथग् विचेतनै:

३४. तनुं विभावसौ=विभावसौ तनुम्

३५. सौम्य=सोम्य व.; प्रणिपाता=विनिपाता अ.ना.; याचित:=याचितां अ.ना.।

३६. त्वदर्पितं=ममार्पितं, मदर्पितं, समर्पितं; त्वरये=ज्वलये; मां विना=मद्विना व.अ.ना.।

३७. एव=एष; यं मया=यन्मया व.अ.ना., तं मया म.; बान्धव:= माधव:। ३८. च=स।

३९. इति देहविमुक्तये स्थितां=इति देहविसर्जने स्थिरां अ.ना., श्रुतदेहविसर्जनोद्यमाम्; विक्लवां=विह्वलां व.अ.ना.; कम्पत=कम्पयत् म.।

४०. पत्नि दुर्ल=पत्न्यदुर्ल; येन स कर्मणा गत:=येन गत: ; कर्म्मणा=कर्म्मिणा। नार्चिषि=नार्चिष:।

४२. पार्वतीं यदा=धर्म्मचारिणी, धर्म्मकारिण; स योज=नियोज व.।

४३. धर्मयाचित:=धर्मचारिणी, धर्म्मचारिणि व.अ.ना.म.; स्मरशापावधिदां=स्मरशापान्तशिवां व., स्मरशापान्त– भवां अ.ना., स्मरशापान्तभवा सरस्वती; चोभये=चोभयो: व.म.अ.ना.; 'चोभयेंयोनय:'=चोभयेऽप्यभिवृभ्यामृतमंशुमानिव।

४५. बुद्धिम् इत्येव सार्वत्रिक: पाठ:। रेनाम्=रेताम्; सुचरितार्थपदै=

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा प्रतिपालयाम्बभूव ।
शशिन इव दिवातनस्य लेखा
दिवसपरिक्षयधूसरा प्रदोषम् ।। ४६।।

इत्यष्टमूर्त्तिमहाकाव्ये कुमारसंभवे महाकविकालिदासकृतौ
रतिविलापो नाम चतुर्थो वायुमूर्त्तिसर्गः ।। ४।।

•

## ।। पञ्चमः सर्गः।।

ॐ तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ।। १।।
इयेष सा कर्त्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ।। २।।
निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिषक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ।। ३।।
मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से! क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ।। ४।।
इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ।। ५।।
कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपः—समाधये ।। ६।।
अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात् प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डितम् ।। ७।।
विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।
बभार बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ।। ८।।
यथा प्रसिद्धं मधुरैः शिरोरुहैर् जटाभिरप्येवमभूत् तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ।। ९।।
प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
अकारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम् ।। १०।।
विसृष्टरागादधरान्निवर्त्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ।। ११।।
महार्हशय्यापरिवर्त्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ।। १२।।
पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणाङ्गनासु च ।। १३।।
अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तनप्रस्रवणैर्व्यवर्द्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ।। १४।।
अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात् पुरः सखीनाममिमीत लोचने ।। १५।।
कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्म्मवृद्धेषु वयः समीक्ष्यते ।। १६।।
विरोधिसत्त्वोज्झितपूर्व्वमत्सरं द्रुमैरभीष्टप्रसवार्च्चितातिथि ।
नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ।। १७।।
यदा फलं पूर्व्व—तपः—समाधिना न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्द्दवं तपो महत् सा चरितुं प्रचक्रमे ।। १८।।
क्लमं ययौ कन्दुकलीलयाऽपि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ।। १९।।
शुचौ चतुर्ण्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ।। २०।।
तथाऽतितप्तं सवितुर्गभस्तिभिर् मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ।। २१।।
अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः ।। २२।।

---

समभिवृद्धरसै अ.ना.।

४६. प्रति=परि; तनस्य=करस्य; लेखा=रेखा; प्रदोषम्=दिनान्तम् अ.ना.।

पञ्चमः सर्गः

१. तथा=ॐ श्रीगणेशाय नमः ॐ तथा समक्षं; प्रियेषु=प्रिये हि; फला=फलो। २. रूपतां=कामतां अ.ना.; वा=तत् अ.ना.।

३. गिरीशप्र=गिरीशं प्र अ.ना., त्रिनेत्रं प्र; अक्त=बद्ध, सक्त, शक्त।

४. मनी००वताः=मीषिताम/ता अर्च्च गृहेषु देवताम्/ताः अ.ना., गृहेषु=गृहेऽपि; पेलवं=पेशलं, कोमलं व.म.अ.ना.; शिरीष=सरीष अ.।

५. ध्रुवेच्छा=श्रुतीच्छा, स्थिरेच्छा, स्थितेच्छा अ.ना.; र्थस्थिर=र्थे स्थिर।

७. रूपाभि=कूलाभि; तदाख्यया तस्याः गौर्या एवाख्यया नामाक्षरैर् गौरीशिखरेति रूपया। तथा च रघु. १८.४१, कुसं. ७.१६। 'किमिव हि मधुराणां मण्डनं नाकृतीनामि'ति शाकुन्तलप्रयोगाच्च।

१०. रोम=रूप व.।

११. विसृष्ट=निसृष्ट अ.ना., विमृष्ट; रुणिताच्च=रागादरुणाच्च; कन्दु=कञ्चु व.म.अ.ना.।

१३. द्वयेऽपि=द्वयेषु व.,द्वयीषु अ.ना.; निक्षेप=निक्षेपम्; दृष्टं=दृष्टिः अ.ना., दृष्टिम्।

१४. प्रस्रवणै=प्रस्नविणी, प्रस्नविनी अ.ना., प्रस्रवनै व.म.;व्यव=रव; येषां=तेषां; माप्त=मात्त; वात्सल्य=वाल्लभ्य। अत्र घटाः स्तना इवेत्युपमितसमास एव विवक्षितः। दुषकश्च सः। स्तन्यैर्घटप्रस्रवणैरिति तु युज्येत वक्तुम्। क्वचित् १४.१५ पद्ययोः क्रमे विपर्य्यासोऽपि।

१५. तथा च=तथैव; तस्यां=तस्याः व.;पुरः=पुरा। स्मरणीयमत्र शाकुन्तलस्य वैखानसेति १.२४ पद्यम्।

१६. मधीतिनीम्=निवीतिनीम्; मृषयो=मुनयो; क्ष्यते=क्षते।

१७. रभीष्ट=रपीष्ट व.; तच्च=तत्र अ.ना.।

१८. पूर्व्व=सर्व; तपःसमाधिना=समा समाधिना अ.ना.; समाधिसाधनम् व.म.; काङ्क्षितं=वाञ्छितं अ.ना.; लभ्य=लब्ध; नपेक्ष्य=नवेक्ष्य; सा चरितुं=साधयितुं।

१९. लीलया=सेवया अ.ना.; व्यगाह्यत=विगाह्यते ;पद्मनिर्मितं=पद्मधर्मि यत्, काञ्चनधर्मि निर्मितं ; त्या च=त्यापि; ससारमे=सुसारमे; च=तत्।

२०. हविर्भुजां शुचिस्मिता=शुचिस्मिता हविर्भुजां अ.ना.; घातिनीं=घातिनां।

२१. तथाऽति=तथाभि अ.ना., तथापि; कृतं पदम्=पदं कृतम्।

२२. किल=खलु अ.ना., बत; वृत्तिर्व्यः साधनः=साधनम्।

निकामतप्ता द्विविधेन वह्निना नभश्चरेणेन्धनसम्भृतेन च ।
तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३॥
स्थिताः क्षणं पक्ष्मसु ताडिताऽधरा पयोधरोत्सेधनिपातचूर्णिताः ।
बलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥ २४॥
शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥ २५॥
निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः पुरोवियुक्ते मिथुने कृपावती ॥ २६॥
मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्त्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां सरोजसन्धानमिवाकरोदपाम् ॥ २७॥
स्वयंविशीर्णद्रुमपत्त्रवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः ॥ २८॥
मृणालिकापेलवमेवमादिभिर् व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २९॥
अथाजिनाषाढधरः प्रगल्भवाग् ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥ ३०॥
तमातिथेयी बहुमानपूर्व्वया सपर्य्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वधिगौरवाः क्रियाः ॥ ३१॥
विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय स क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२॥
अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्त्तसे शरीरमाद्यं खलु धर्म्मसाधनम् ॥ ३३॥
अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥ ३४॥
अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापराधिषु ।
य उत्पलाक्षि! प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५॥
यदुच्यते पार्वति! पापवृत्तये न रूपमित्यव्यभिचारि तद् वचः ।
तथाहि ते शीलमुदारदर्शने! तपस्विनामप्युपदेशतां गतम् ॥ ३६॥
विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७॥
अनेन धर्म्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि!।
त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥ ३८॥
प्रयुक्तसत्कारविशेषमात्मना न मां परं त्वं प्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि! सङ्गतं मनीषिभिः साप्तपदीनमुच्यते ॥ ३९॥
अतोऽत्र किञ्चिद् भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने! न चेद् रहस्यं प्रतिवक्तुमर्हसि ॥ ४०॥
कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात् किमतः परं वद ॥ ४१॥
भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि! त्वयि ॥ ४२॥
अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु! कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत् पन्नगरत्नसूचये ॥ ४३॥
किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥ ४४॥
दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५॥
निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥ ४६॥
अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७॥

---

२३. द्विविधेन=विविधेन म.; च=सा।
२४. स्थिताः क्षणं=क्षणं स्थिताः; त्सेध=त्सङ्ग अ.ना.; चिरेण=क्रमेण।
२५. वात=वर्ष व.,बाष्प।
२६. सात्यन्त=सात्यर्थ व.; त्किरा=त्करा व., त्तमा; कृपावती=दयावती ।
२७. क्षत=क्षित; सन्धान=सन्तानम् अ.ना., द्र. शृ.प्र. ५.५८
२८. शीर्ण=कीर्ण; र्णेति च=र्णामिति व.।
२९. पेलव=कोमल; स्वमङ्गं=तदङ्गं व.अ.ना.; ग्लप=क्षप व.अ.ना.म.। सा=स। तपोवनवर्णनम्। इतः परं नूत्नं पद्यम् —
सुरास्तदुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शम्भुवशिक्रियाक्षमम् ।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं पशूनां सुतमाजिहेतवे॥
तदुद्वीक्ष्य=समुदीक्ष्य; नगेन्द्र=नरेन्द्र; वशि=वश ; हेतवे=हेतुम्।
३०. तेजसा=वर्चसा अ.ना.; बद्धः=बन्धः अ.ना.।
३१. पूर्व्वया=रूपया; म्येऽपि=म्येऽभि अ.ना.; निविष्ट=विशिष्ट ; साम्येऽपि निविष्ट=साम्ये विनिविष्ट; अधिगौरवाः=अतिगौरवाः म. अ.ना.। द्र. रघु. १५.३८।
३२. परिगृह्य=प्रतिगृह्य व.अ.ना.; ज्झितक्रमः=नुक्रमज्ञा।
३३. अपि=अयि; क्रियार्थं=क्रियार्थे; विधि=विधौः; अपि=अयि।
३४. अपि=अयि; त्वदा=त्वया; यदा=समा।
३५. अपि=अयि; दर्भ=दर्भान्; अपराधिषु=अपहारिषु म., उपहारिषु व. म.अ.ना.; तवाक्षि=यदक्षि; य उत्पलाक्षि प्रचलैर्विलोचनैस्त=य उत्पलाक्षेपचलै/ रैर्विलोकितैस्त; सादृश्य=सापत्य व.म.अ.ना.। द्र. कुसं. ७.१६।
३७. विकीर्ण=विशीर्ण, प्रकीर्ण; प्रहासि=प्रभासि, प्रकाशि, प्रहारिभिः, प्रवाहिभिः।
३८. मद्य मे=मध्यमे; भाविनि=भाजिनि; भामिनि व.अ.ना., भामिनी; देक एव=देष एकः।
३९. सत्कार=संस्कार; परं त्वं प्रति=परं सा प्रति अ.ना.।
४०. अतोऽत्र=अहोऽद्य; प्रतिवक्तुमर्हसि=प्रतिगोप्तुमर्हसि, प्रतिबोधयिष्यसि अ.ना., प्रतिपादयिष्यति, प्रतिगोपयिष्यति; मर्हसि=मिच्छसि।
४१. वोदितं=आर्जितं अ.ना., स्थितं, धृतं; वद=तव।
४२. कृशोदरि=तनूदरि व., तलोदरि अ.ना.।
४३. अलभ्य=अलब्ध, अनन्य; पराभिमर्शो=परावमर्शो/र्षो; सूचये=सूचिषु, सूतये अ.ना.। सुभ्रुः कुतस्तातगृहेऽवमानम् इति शार्पेदत्तं पाठान्तरम्।
४४. स्फुटचन्द्रतारका म.=विनिकीर्णतारका अ.ना., विनिकीर्य तारकाः।
४५. अन्विष्यति=अन्विच्छति अ.ना.।
४६. दृश्यते=विद्यते।
४७. उपेक्षते=अपेक्षते, अपेक्ष्यते; श्लथलम्बिनीर्जटाः कपोलदेशे अ.ना. =श्लथबन्धलम्बिनीर्जटाः कपोले व., श्लथबन्धिनीरिमा जटाः कपोले; कलमाग्रपिङ्गला जटाः कपोले श्लथलम्बिनीरिमाः।

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकरप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥४८॥
अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं रविमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥४९॥
कियच्चिरं श्राम्यसि गौरि! विद्यते ममापि पूर्वाश्रमसञ्चितं तपः ।
तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥५०॥
इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्त्तिनीं विवर्त्तितानञ्जननेत्रमैक्षत ॥५१॥
सखी तदीया तमुवाच वर्णिनं निबोध साधो! यदि चेत् कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥५२॥
इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ॥५३॥
असह्यहुङ्कारनिवर्त्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।
इमां हृदि व्यायतपातमक्षणोद् विशीर्णमूर्तेरपि पुष्पधन्वनः ॥५४॥
तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसराऽलका ।
न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥५५॥
उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः निन्नरराजकन्यका वनान्तसङ्गीतसखीररोदयत् ॥५६॥
त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥५७॥
यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं जनं कथम् ।
इति स्वहस्तालिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥
यदा च तस्याऽधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥५९॥

---

४८. मात्र=मान; कराप्लुष्ट=करस्पृष्ट; लेखा=रेखाम् अ.ना.; दूयते=दीर्यते व.अ.ना., शीर्यते।
४९. लक्ष्यम्=लक्षम् व.अ.ना., पात्रम्; रवि=चिर, चर, स्थिर व.; मस्य=मात्म।
५०. गौरि=सुभ्रु; सञ्चितं=सम्भृतं; तदर्ध=ततोऽर्ध, तस्यार्ध; वरं तमि=तमर्थमि।
५१. गतं=रथं; अथो=अतः, ततः, तथा; विवर्त्ति=निवर्त्ति अ.ना., विवर्जि; शशाक शंसितुम्=न जगाद वाञ्छितम् अ.ना.।
५२. निबोध=विबोध; 'मिवोष्णवारणं'=मिवैतया कृतंस्तपः, साधनमुष्णवारणम्।
५३. इयं=इत्थं; नवमत्य=नवमन्य; मानिनी=भामिनी अ.ना.; निग्रहात्=विग्रहात्।
५४. पुरा=स्मरा व.; मक्ष=मक्षि व.म.अ.ना.; विशीर्ण=विनष्ट।
५५. तदा=ततः; ऽवपि=ष्वियम्।
५६. उपात्त=उदात्त; वर्णे चरिते=वर्णैश्चरितैः; कण्ठ=कण्ठैः ; ररोदयत्=व्यरोदयत्।
५७. शेषासु००क्षणं=शेषासु निमीलिता क्षणं निशासु;व्यबुध्यत=विबुध यते; क्व=त्वं।
५८. यदा=यतः, सदा अ.ना.; इति=तया; सर्वा=स्वप्न; हस्तालिखितश्च=हस्तोल्लिपितश्च।
५९. च=हि अ.ना. ,तु,पि; यदा च तस्याधि=यदेश्वरस्याधि;

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपः—साक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥६०॥
न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपः—कृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥६१॥
अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥६२॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथञ्चिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥६३॥
यथा श्रुतं वेदविदाम्वर! त्वया जनोऽयमुच्चैः—पदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥६४॥
अथाऽऽह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्त्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न तु कर्तुमुत्सहे ॥६५॥
अवस्तुनिर्बन्धपरे! कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥६६॥
त्वमेव तावत् परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥६७॥
चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥६८॥
अयुक्तरूपं किमतः परं वद त्रिणेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् हरिचन्दनाङ्किते पदं चिताभस्मरजः करिष्यति ॥६९॥
इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥७०॥

---

विचिन्वती=निचिन्वती।
६०. दृष्टमेष्वपि=बद्धमेष्वपि ; च=तु; न चापि लब्धा;।
६१. कदा=कथं; अस्रोत्तरमी=अश्राकुलमी, अस्रान्तरमी अ.ना., अश्रान्तनि; अभ्युप=अभ्यव अ.ना.; सीतां=शीताम्।
६२. सद्भाव=तद्भाव; दितो=दिते व.; अयी=अपि व.अ.ना.; हास इ=हासमि।
६३. थाग्र=थार्द्र; समर्पयन्ती=समर्थयन्ती; मालिकां=मण्डलं व.; चिर=चिरं। ६४. नोत्सुकः=नोद्यतः।
६५. अथाऽऽह=तथाऽऽह; महेश्वर=ममेश्वरः; पुनरेव=पुर एव अ.ना.; रतिं=रतं व.;
६६. कथं नु ते=हि पार्वती; मामुक्त=माबद्ध व.; कौतुकः=कङ्कणः; करेण=भुजेन; प्रथमावलम्बनम्=प्रथमं कथं नु तत्।
६७. स्वयं=स्वतः अ.ना.; दुकूलं=दुगूलं व.; कलहंस=च सहंस व.; गजाजि=क्व चाजि अ.ना.; वर्षि च=वर्षि व, वर्षि तत् अ.ना.।
६८. प्रकराव=प्रकरावि; नुमन्यते=नुमंस्यते व., नुगम्यते, गंस्यत इति तु स्यात्; रावकीर्णयोः=करप्रकीर्णयोः, करास्थिकीर्णयोः। अत्रास्थिपदमधिकम्, बिम्बपक्षे तत्प्रातिनिध्यस्यानवकाशात्। परेत=परेषु, परीत।
६९. रूपं=रूपः, मेतत्; वद=भवेत्, वह, त्रिणेत्रवक्षः सुलभं तवापि यत्=त्रिनेत्रवक्षः सुलभं चेत्,त्रिनेत्ररूपं००चेत् वक्षः किमतः परं वह, सुलभं तवापि चेत्; नास्पदे=नाङ्किते।
७०. हार्यया=भार्यया। अ.ना.

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७१॥
वपुर् विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥
निवर्त्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥७३॥
इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥७४॥
उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥७५॥
विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥७६॥
अकिञ्चनः सन् प्रभवः स संपदां, त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥
विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्त्तेरवधार्यते वपुः ॥७८॥
तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्म रजोविशुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥
असम्पदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोऽरुणाङ्गुली ॥८०॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥८१॥
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥८२॥
निवार्यतामालि! किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥८३॥
इतो गमिष्याम्यथवेति भाषिणी चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥८४॥
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥८५॥
अद्यप्रभृत्यवनताङ्गि! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥८६॥

इत्यष्टमूर्त्तिमहाकाव्ये कुमारसम्भवे महाकविकालिदासकृतौ तपःफलोदयो नाम पञ्चम आकाशमूर्त्ति सर्गः ॥५॥

•

## ॥षष्ठः सर्गः॥

ॐ अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥१॥
तया व्याहृतसंदेशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभाष्ये मधौ परभृतामुखी ॥२॥
स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥३॥
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥४॥
आप्लुतास्तीर—मन्दारकुसुमोत्किर—वीचिषु ।
व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥५॥
मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाऽऽश्रिताः ॥६॥

---

७१. कपालिनः=पिनाकिनः अ.ना.म.; कलावतः=कलात्मनः अ.ना.। द्र० कुट्टनीमते १३०।
७२. मलक्ष्यजन्मता=मलक्षिता जनिः; मलक्ष्यरूपता।
७३. अपेक्ष्यते००क्रिया=अपेक्षते साधुजनो न वैदिकीं००हि००क्रियाम् व., उपेक्षते साधुजनो न वैदिकी ृमशानशूलस्य हि यूपसत्क्रियाम्, उपेक्षक्ष्यते साधुजनो न वैदिकी००क्रियाम्।
७४. वेपमाना=कम्पमाना;विकुञ्चि=निकुञ्चि अ.ना.; लतमाहिते तया=लतयाऽऽहिते तया/कृते।
७५. महात्मानाम्=महात्मनः, पिनाकिनः।
७६. किमेभिः=किमाभिः अ.ना.; हता=हता; वृत्तिभिः=वृत्तेः। आभिरित्येव पाठोऽत्र लघुतरः, तत्र बहुव्रीहिप्रसक्तेः परिहारात्, याः खल्वाशोपहतात्मनां वृत्तयस्तासु कीदृशी नु प्रवृत्तिः निराशिषः।
७७. त्रिलोक=स लोक व.; याथार्थ्य=याथात्म्य व.।
७८. दुकूल=दुगूल व.; वेन्दु=चन्द्र। इन्दुशेखरपदं यौगिकमेवात्र, न रूढम्; विश्व=दिव्य।
७९. संसर्ग=संस्पर्श व.; भस्म रजो=भस्मरजो; तथाहि=तथापि; नृत्या=नृत्ता अ.ना.; लिप्यते=लुप्यते।
८०. गम्य=नम्य; णाङ्गुली=णाङ्गुलौ।
८१. विवक्षता=विवृण्वता।
८२. श्रुतः=श्रुतम्; सः=वः ; स्थितं=स्थिरम् ; मीक्षते=दर्शि/र्शनी व.।
८३. प्ययं=प्यसौ अ.ना.; महतोऽपभाषते=महतो/तां व/विभाषते व.म.
८४. बाला स्तन=गौरी रय, सा च स्तन व.अ.ना., साग्रस्तन; कृतस्मितः=शुचिस्मितः।
८५. यष्टिः=सन्धिः व.; निक्षेपणाय=निक्षेप एव व.अ.ना.; मुद्वहन्ती=मर्पयन्ती।
८६. त्यवनताङ्गि=त्यनवमाङ्गि इति भोजः; क्रीत=प्रीतः; क्लम=श्रम; विधत्ते=पिधत्ते।
षष्ठः सर्गः
१. अथ=ॐ अथ॥१॥ श्री॥ ऐं नमः॥ अथ॥; दाता=पिता।
२. वाभाष्ये=वाम्याशे/से व.म.अ.ना.; भृतामु=भृतोन्मु अ.ना.म., भृतासखी व.।
३. र्मयान्=र्गणान्, गृहान् व.; ओञ्ज्योतिर्मयान्=ज्योतिर्म—यानृओन्।
४. तपोधनाः=पुरागताः, प्रभोः पुरः।
५. मोत्किर=मोत्क, मोत्तर व.अ.ना.; गन्धिषु=वाहिषु।
६. बिभ्रतो=बिभ्राणाः; हैम=हेम;वल्कलाः=बन्धनाः;सूत्राः=युक्ताः; वाऽऽश्रिताः=व ऽऽश्रिताः।

अधः प्रवर्त्तिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना शश्वत् सप्रणाममुदीक्षिताः ।।७।।
आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ।।८।।
सर्गशेषप्रणयनाद् विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इति कीर्त्तिताः ।।९।।
प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जाना फलान्यपि तपस्विनः ।।१०।।
तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ।।११।।
तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ।।१२।।
तद्दर्शनादभूच्छम्भोर् भूयान् दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलसाधनम् ।।१३।।
धर्मेणापि पदं शर्व्वे कारिते पार्व्वतीं प्रति ।
पूर्व्वापराधभीतस्य कामस्योच्छ्वसितं मनः ।।१४।।
अथ ते मुनयः सर्व्वे मानयित्वा जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ।।१५।।
यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ।।१६।।
यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याऽप्यपथं मनोविषयमात्मनः ।।१७।।
यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां वरः ।
किं पुनर् ब्रह्म/विश्व—योनेर्यस्तव चेतसि वर्त्तते ।।१८।।
सत्यमर्क्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं तस्मात् स्मरणानुग्रहात् तव ।।१९।।
त्वत्संभावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ।।२०।।
या नः प्रीतिर्विरूपाक्ष! त्वदनुध्यानसंभवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ।।२१।।

साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्त्तसे ।।२२।।
किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ यस्तस्य संहर्त्ता भागः कतम एष ते ।।२३।।
अथवा सुमहत्येषा प्रार्थना देव! तिष्ठतु ।
चिन्तितोपस्थिताँस्तावच्छाधि नः करवाम किम् ।।२४।।
अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः ।।२५।।
विदितं वो यथा काश्चिन्न मे स्वार्थाः प्रवृत्तयः ।
ननु मूर्त्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ।।२६।।
सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ।।२७।।
अत आहर्त्तुमिच्छामि पार्व्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ।।२८।।
तामस्मदर्थे युष्माभिः प्रार्थितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ।।२९।।
उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसबन्धं वित्त मामप्यवञ्चितम् ।।३०।।
एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ।।३१।।
आर्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति ।
प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ।।३२।।
तत् प्रयातौषधीप्रस्थं सिद्धये हिमवत्पुरम् ।
महकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ।।३३।।
तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ।।३४।।

---

७. धः प्रवर्त्तिता=धः प्रस्थापिता व.अ.ना.; शश्वत्=साक्षात् म.।
८. सार्ध=सम; धृतया=धतया।
९. पुरतनाः=पुरन्तनाः; इति=इव।
१०. मुपभु=परिभु; १०.—११.कुलकम्, आदिकुलकम्।
१२. पश्यदी=र्चयदी; स्थैषा=स्थेयं; महितं=महताम्।
१३. भूयान्=भूयः; दारार्थमादरः=दारक्रियादरः अ.ना; सत्पत्न्यो=दाम्पत्यम् व.म.अ.ना.; साधनम्=कारणम् म.।
१५. मुनयः=प्रथमे,ऋषयः; सर्व्वे=दिव्याः; पूजयित्वा=मानयित्वा अ.ना., प्रणिपत्य; जगद्गुरुम्=जगत्पतिम्; इदमू=इत्थमू; प्रीति=प्रीत्या; तत्वचः=कितं वचः।
१६. विधिना=विधिवद्; यच्च=यत्तु। युग्मम्।
१७. रथस्याऽप्यपथं/दं=रथस्याविषयं म.। युग्मम्।
१८. क्रिं पुन=किमुत, किमत्र।
१९. सत्यम्=नित्यम् अ.ना.;परम=पदम;पदम्=वयम्; तरं=तरां; तस्मात्=तत्रः, ताभ्यां। २०. धत्ते=दत्ते।
२१. विरूपाक्ष=विशालाक्ष; त्वदनुध्यान=तव निध्यान अ.ना.; किमावेद्यते=किमाख्यायते; सि=हि।
२२. दृष्टो=द्रष्टा; सि न पुनर्विद्मस्त्वां=सि नो विद्मः पुनस्त्वां; वयमञ्जसा=अञ्जसा वयम्; कथ=दर्श।
२३. तत्=तम्; अथ=अथो अ.ना.; यस्तस्य=विश्वस्य म.।
२४. तोपस्थिताँ=तोपगताँ व.; वाम=वाणि।
२५. उपचिन्वन्=विस्तारयन्।
२६. स्वार्थाः=स्वार्थ। अष्टाभिः पञ्चमहाभूतानि सूर्याचन्द्रमसौ यजमानश्चेत्यभिज्ञानशाकुन्तलाद्युक्ताभिः। सूचितः=चोदितः।
२८. अत आहर्तु=अहं ग्रहीतु; आत्म=पुत्र; जन्मने=जन्मनि।
२९. मस्मदर्थे/दर्थ युष्माभिः=मस्मभ्यं सपर्णाभिः ;लयः=चलः; संबन्धाः=संबाधः। ३१. हि साधवः एवं=इत्थं; मनन्ति हि=मनन्तीह, चरन्ति हि मनीषिणः।
३२. प्यरुन्धती=चारुन्धती; व्यापारं=साहाय्यं अ.ना., व्याहारं।
३३. महाकोशी=महाकाशी, महाकाली, महाकोशे व., महाकौशी अ.ना., कौशिकीसं; रेव=रस्तु अ.ना.नः=वः।
३४. योन्मुखे=योत्सुके व.; जहुः जहु; तपस्विनः=तपोधनाः। स्मरणीयमत्र मालविकाग्निमित्रस्य 'कान्तासम्मिश्र देहोऽप्यविषयमनसां यः पुरस्ताद् यतीनामि' ति नान्दीपदम्।

ततः परममोमुक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि संप्राप्तः प्रथमोद्दिष्टमास्पदम् ॥ ३५॥
ते चाकाशमसिश्याममुत्पत्य परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६॥
अलकामतिवाह्येव वसतिं वसुसंपदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥ ३७॥
गङ्गास्रोतः–परिक्षिप्त–वप्राऽन्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥ ३८॥
जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किम्पुरुषाः पौरा योषितो वनदेवताः ॥ ३९॥
शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धाः करणैर् मुरजस्वनाः ॥ ४०॥
यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृह–यन्त्रपताका–श्रीरपौरादरनिर्मिता ॥ ४१॥
यत्र स्फटिक–हर्म्येषु नक्तमापानभूमिषु ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२॥
यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥ ४३॥
यौवनान्तं वयो यस्मिन्नातङ्कः कुसुमायुधः ।
रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः ॥ ४४॥
भ्रूभेदिभिः सकम्पोष्ठैर् ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामप्रसादार्थिनः प्रियाः ॥ ४५॥

३५. परममोमुक्त्वा=परममित्युक्त्वा, प्रमाणमित्युक्त्वा, प्रयाम इत्युक्त्वा, मण्डलम्=मण्डली; संप्राप्तः=संक्रान्तः अ.ना.; मास्पदम्=माश्रमम्। अत्र 'परमम् ओम्' इति स्वीकारोक्तिद्वयम्, विचिकित्सालेशस्याप्यनवकाशं द्योतयितुम्।

३६. ते चा=तेऽप्या, तेऽथा, त आ मुत्पत्य व.अ.ना.=मुत्प्लुत्य, मुपेत्य; परमर्षयः=मुनिपुंगवाः वपा..; आसेदु=आजग्मु; समरंहसः=तुल्यरंहसः, सह मानसा: व., समरंहसा।

३७. वसु=बन्धु; वाह्येव=वाह्यैव; कृत्वेवोप=त्वेव विनि व.।

३८. प्तवप्रा=प्तं वप्रा व.म.अ.ना., परिक्षेपो वप्र एवोचितान्वयः; न्तर्ज्व=न्तज्वअ.ना.।

३९. जित=वीत अ.ना., गत; यत्राश्व=अश्वश्च; यक्षाःकिं=यक्षकिं।

४०. सक्त=लग्न; व्यज्य=वीज्य; वेश्मनाम्=वेश्मसु अ.ना.; अनु=मन्द्र; करणै=करुणै; मुरज=मरुज; स्वनाः=स्वनैः।

४१. विलोल=चञ्चलः; यन्त्र=च्छत्र; पताकाश्रीर=पताकश्रीर, श्रीः पौरैरादर।

४२. हर्म्येषु=हर्म्याणां; आपान=सोपान ना.; उपहारताम्=उपकारताम् व.। उपहारा अत्र हारच्छेदाः, आपानभूमिषु तेषामेव वर्णना।

४३. धिप्र=धीप्र; नेष्वभि=नेऽप्यभि व.ना.।

४४. यस्मिन्=यस्मात्; न्नातङ्कः=न्नान्तकः म., न्नानङ्गः; युधः=युधात् म.; रतिखेदसमुत्पन्ना=रतिः खेद/स्वेदसमुत्थानं, रतिखेदसमुत्थाना; निद्रा=सुप्तिः।

४५. सकम्पौ=प्रकम्पौ, विकम्पौ; भ्रूभङ्गिभिः=भेदिभिः ; क्रोधैः कृताः=कोपकृताः; मप्रसा=माप्रसा व.अ.ना.। यद्धि प्रसादेन करिष्यते तत् क्रोधेनैव सम्पद्यत इति प्रसादप्रार्थने कैमर्थक्यम्। द्र. शृङ्गारप्रकाशे ३०.४३

सन्तानकतरुच्छायसुप्तविद्याधराध्वगाः ।
यस्य चोपवनं बाह्यं सुगन्धिर्गन्धमादनः ॥ ४६॥
अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे ॥ ४७॥
ते सद्मनि गिरेर्वेगादुन्मुख–द्वाःस्थ–वीक्षिताः ।
अवतेरुर्जटाभारैर् लिखिताऽनलनिश्चलैः ॥ ४८॥
गगनादवतीर्णा सा यथावृद्धपुरस्सरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४९॥
तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः ।
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥ ५०॥
धातुताम्राऽधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥ ५१॥
विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः ।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्म्मभिः ॥ ५२॥
तत्र वेत्रासनासीनान् कृताऽऽसनपरिग्रहः ।
इत्युवाचेश्वरान् वाचं प्राञ्जलिः पृथिवीधरः ॥ ५३॥
अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४॥
मूढं बुधमिवात्मानं हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५॥
अद्यप्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ५६॥

४६. कुलकम् । यस्य चोपवनं बाह्यं=बाह्यं चोपवनं यस्य; सुगन्धिः=गन्धवद् व., सुगन्धं, गन्धिमद्; मादनः=मादनम् व., शैलवाचित्वात् पुंस्त्वमेवात्र युक्तम्।

४७. अथ ते=ततस्ते, तं कान्तं व.अ.ना.म.; मुनयः=ऋषयः; दिव्याः=सर्व्वे; सन्धि=सन्धिं, श्यन्दसु; सुकृतं=सुकृतां अ.ना.; मिव=मेव। ४८.गिरेः=गुरोः; तेरुः=पेतुः व.अ.ना.; निश्चलैः= निश्चलाः, सन्निभैः। ४९. युगलकम्।

५०. अर्घ्यमा=अर्घमा; दूरात्=दूरम् व.; गिरिः=नगः।

५१. सुव्यक्तो=सुव्यञ्जो व.; निति=निव, गिरिः। ५१ =५१. युग्मम्।

५२. कारैः=कारान्, संस्कारैः; स्य दर्शकः=स्य देशिकः, स्य देशिक, प्रदर्शकः; स तैराक्रमया=स तैराक्रामया म.अ.ना., स तदाक्रमया, स तानाक्रमया; कर्म्मभि=वर्त्मभिः।

५३. कृताऽऽसन=अनासन ना., नीचासन; इत्युवा=प्रत्युवा; चेश्वरान्=च मुनीन्, ऋषीन्; वाचं=वाचः व.,सर्व्वान्, सम्यक्; पृथिवीधरः=जगतीश्वरः, भूधरेश्वरः म., धरणीधरः अ.ना.।

५५. मूढं=मूर्खं व.; बुध=बुद्ध व.म.अ.ना.; हैमीभूत=हेमीभूत, हैमीकृत अ.ना.; ग्रहात्=ग्रहम्।

५६. भूतानाम्=मर्त्यानाम् अ.ना.; अधि=अभि व.अ.ना.; शुद्धये=सिद्धये।

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः! ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ।।५७।।
जङ्गमं प्रेष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ।।५८।।
भवत्संभावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ।।५९।।
न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ।।६०।।
कर्त्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते ।
शङ्के मत्पावनायैव प्रस्थानं भवतामिह ।।६१।।
तथापि तावत् कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ।।६२।।
एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ।।६३।।
इत्यूचिवाँस्तमेवार्थं दरीमुख–विसर्पिणा ।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः ।।६४।।
अथाऽऽङ्गिरस–मग्रण्य–मुदाहरण–वस्तुषु ।
ऋषयश्चोदयामासुः प्रत्युवाच स भूधरम् ।।६५।।
उपपन्नमिदं सर्व्वमतः परमपि त्वयि ।
मनसः शिखराणां च सदृशी ते समुन्नतिः ।।६६।।
स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते ।
चराचराणां भूतानां कुक्षिराधारतां गतः ।।६७।।
गामधास्यत् कथं नागो मृणालमृदुभिः फणैः ।
आ रसातलमूलात् त्वमवालम्बिष्यथा न चेत् ।।६८।।
अच्छिन्नाऽमलसन्तानाः समुद्रोर्म्यनिवारिताः ।
पुनन्ति लोकान् पुण्यत्वात् कीर्त्तयः सरितश्च ते ।।६९।।
यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ।।७०।।
तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।
त्रिविक्रमोद्यतस्यासीत् स च स्वाभाविकस्तव ।।७१।।
यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ।।७२।।
काठिन्यं स्थावरे काये भवता सर्व्वमर्पितम् ।
इदं तु यद् भक्तिनम्रं सतामाराधनं वपुः ।।७३।।
तदागमनकार्यं नः शृणु कार्यं तवैव तत् ।
श्रेयसामुपदेशात् तु वयमत्रांशभागिनः ।।७४।।
अणिमाऽऽदिगुणोपेत–मस्पृष्ट–पुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्त्ति यः ।।७५।।
कल्पितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मनि ।
येनेदं ध्रियते विश्वं धुर्यैर्यानमिवाऽध्वनि ।।७६।।

---

५७. पातेन=वाहेन; धौत=धृत।

५८. प्रेष्य=प्रैष्य म., प्रेक्ष्य; भावे वः=भावेन, पक्षे वः; णाङ्कितम्=णाङ्कितैः; मन्ये=तद्धि व.; द्विरूप=द्वैरूप्य व.अ.ना., विरूप म.; वपुः=कृतम् व.। ग्रहं तद्धि द्वैरूप्यमपि मे कृतम्, ग्रहं मन्ये द्वैरूप्यं तेन मे कृतम् अ.ना.।

५९. अपि=अधि, अभि, अति; मे=हि।

६०. दरीसंस्थं=शरीरस्थं; भास्वतां=भास्वता व.; मपास्तं मे=मपि द वस्तं।

६१. किं नोपपद्यते=किमुपदिश्यते, पद्यते=दिश्यते; शङ्के=मन्ये म.; मन्ये मत्पावनार्थाय; मिह=मिदम् व., हि मे।

६२. मर्हसि=मर्हतः।

६३. जीवितम्=भूषणम्,भूषणा; येनात्र वः=येनार्थिनो यूयम्; कार्यम्=कृत्यम् व. ; बाह्यव='वा ह्यव'इति तु शृङ्गारप्रकाशे ५.१०९। 'अहं मेना पार्वती चे'ति त्रयमेवात्र वस्तु, अवस्त्वेवान्यत् सर्व्वं यदेतत्त्रितयभिन्नमिति पाठान्तरमेवात्र महिमानं बिभर्त्ति।

६४. त्यूचिवाँस्त=त्युदीरित; दरी=गुहा म.; द्विरिव=द्विरेव; लयः=चलः।

६५. उदाहरणवस्तु वक्तव्यार्थनिवेदनकलाकौशलम्, अवाच्यवचन–वाच्यावचनपुनरुक्तिपरिहारपूर्वकमन्यूनानतिरिक्तत्वमुग्धमुदीरणम्। तथा च भारविः 'उदाजहार द्रुपदात्मजा गिरः'। आङ्गिरसो बृहस्पतिः। स एवाग्रे 'एवंवादिनी'– ति पद्ये देवर्षिपदेन परामृक्ष्यते, न तु नारदः, यथोच्यते रसगङ्गाधरे पण्डितराजेन ''नारदकृतविवाहचर्चायामि'' ति। चोदया=प्रेरया, नोदया म.; प्रत्युवाच स भूधरम्=स च प्राह महीधरम्। ६६. मतः=मितः।

६७. स्थावरात्मा=स्थावराणां। तथा च गीता १०.२५। तथाहि ते=मनीषिणः। अतः परं ६८पद्यतया पठितं पद्यम् –
'निःशेषभूत–सन्ताप–सन्ततिच्छेदिना भवान् ।
हिमरूपेण यशसा धवली–कृतविग्रहः ।।

६८. मधास्यत्=माधास्यत्; मृदुभिः=सदृशैः व.।

६९. मल=मूल; र्म्य=र्मि ना.; लोकान्=लोकम् व.ना.।

७०. ृलाघ्यते=लाघते अ.ना.; प्रभवेण=प्रभवेन, प्रसवेन अ.ना., प्रभवेण/न, प्रपातेन। गङ्गायाः हि प्रथमः प्रभवो विष्णुपादः, द्वितीयश्च भवान्। उच्छिरस्त्वमुभयत्र समानम्। अरुणगिरिनाथनारायणौ पुनः पद्यमिदमेवं पठतः–यथैव श्लाघते गङ्गा पादेन परमेष्ठिनि।
प्रथमेन द्वितीयेन तथैवोच्छिरसि त्वयि।।

७१. सीत् स च=भूत् सोऽपि; तव=तथा।

७२. पदमातस्थुषा त्वया=पदमाक्रम्य तस्थुषा अ.ना.; वितथी=बिफली।

७३. भवता=भवतः अ.ना., भवतां; नम्रं ते=नम्रस्य; सतामा–राधनं=महदाराधनं, अर्हदाराधनं व.अ.ना., महोदारतरं, मभूदाराधनं। इत्थमत्र त्रेधा व्यवस्थितो भेदः 'इदं तु ते भक्तिनम्रं महदाराधनम्' इति 'तु ते भक्तनम्रमभूदाराधनं इति, 'इदं तु भक्तिनम्रस्य महदाराधनमि'ति च।

७४. तदाग=यदाग अ.ना., यथाग; तत्=च; शात् तु=शाश्च; मत्रां=मप्यं व.; गिनः=जिनः।

७५. गुणोपेतम्=गुणोत्थानम् व., गुणैश्वर्यम्, गुणैर्व्याप्तम् ; स्पृष्ट=स्पष्ट; ईश्वर=ईश्वरम्।

७६. कल्पिता=कलिता म.; आत्मनि=आत्मभिः व.; येनेदं=यस्येदं व.; धार्यते=तन्यते व., तन्न्यते; विश्वम्=व्यक्तम्।

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्त्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥७७॥
स ते दुहितरं साक्षात् साक्षी विश्वस्य कर्म्मणः ।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः ॥७८॥
तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्त्रे प्रतिपादिता ॥७९॥
यावदेतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्येनामीशो हि जगतः पिता ॥८०॥
प्रणम्य शितिकण्ठाय देवतास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥८१॥
उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥८२॥
अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुता—संबन्ध—विधिना भव विश्वगुरोर् गुरुः ॥८३॥
एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्व्वती ॥८४॥
शैलः संपूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥८५॥
मेने मेनाऽपि तत् सद्यः पत्युः कार्य्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥८६॥
इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः/सा ।
आददे वचसामन्ते मङ्गलाऽङ्कृतां सुताम् ॥८७॥
एहि विश्वात्मने वत्से! भिक्षासि परिकल्पिता ।
अर्थिनो मुनयः, प्राप्तं गृहमेधिफलं मया ॥८८॥

---

७८. कर्मणः=कर्मणाम्; णुते=णीते; क्रामितैः=क्रमितैः अ.ना. ।
७९. सद्भर्त्रे प्रति=सद्भर्तुः प्रति, सद्भर्तृप्रति; पादिता=पालिता।
८०. यावदेता=यावन्त्येतानि म., यावद्द्वयानि व.अ.ना., यानि द्वयानि; यन्त्येना=न्त्वेत; जगतः=जगतां।
८१. शितिकण्ठाय=नीलकण्ठस्य, यन्त्वस्याः=यन्त्यस्याः।
८२. त्वत्कु=स्वकु; कुलोद्भूत=कुलोन्नत।
८५. शैलः सं=शैलस्तु; मुदैक्षत=मुवैक्षत व.; नेत्राः=तन्त्राः, मुख्याः; कन्यार्थेषु=कन्यार्थे हि म.अ.ना.।
८६. वल्लभाऽरुणगिरिनाथनारायणाः पद्यमिदं त्यजन्ति। सद्यः=सर्व्वं, साधु; कार्यमभी=र्यं समीप्सि, र्यं समीहि; भवन्त्यव्यभि=भवन्ति व्यभि, न भवन्त्यभिचा; ण्यो भर्तुरिष्टे=ण्योऽभर्तृष्वेव। अन्तिमे पाठभेदे मूलपाठ एवंविधः संभाव्येत 'भवन्ति व्यभिचारिण्योऽभर्तुष्वे'ति।
८७. इदम्=एवम्; विमृश्य=विचार्य, विचिन्त्य अ.ना., ददे=दधे; वचसाम=वचनस्यान्ते। सर्वत्रैव सः इत्येव, न तु सेति पाठः। सा एव तूचितः। आगामिनि पद्ये भिक्षेतिपदस्य आर्यामुख एवा स्वाभाविकत्वात्। दत्ततपश्चरणक्लेशाय शिवायोपालम्भोऽप्यत्र सुलभः। अत्रालङ्करणकालगतो व्यापारोऽनुसन्धेयः।
८८. विश्वात्मने=शर्व्वात्मने, शर्व्वार्पणे, शर्व्वार्पणा व., सर्व्वात्मने; सि=त्वं व.अ.ना.।

एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वास्त्रिलोचनवधूरिति ॥८९॥
ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीभिरेधयामासुः पुरः—पाकाभिरम्बिकाम् ॥९०॥
तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥९१॥
तन्मातरं चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्व्वस्य विशोकामकरोद् गुणैः ॥९२॥
वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय चेलुश्चीरपरिग्रहाः ॥९३॥
ते हिमाचलमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥९४॥
पशुपतिरपि तान्यहानि कृच्छ्रा—
दगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्यु—
र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥९५॥

इति अष्टमूर्तिमहाकाव्ये कुमारसंभवे महाकविकालिदासकृतौ उमाप्रदानो नाम षष्ठः मनश्चन्द्रमूर्तिसर्गः ॥६॥

•

## ॥सप्तमः सर्गः॥

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥१॥
वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।
आसीत् पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥२॥
सन्तानकाकीर्णमहापथं तच्चीनांशुकैः कल्पितकेतुमालम् ।
भासा ज्वलत्काञ्चनतोरणानां स्थानान्तरस्वर्ग इवाबभासे ॥३॥

---

८९. मृअीना=मुनीना; महीधरः=स भूधरः वपा.; ८९.—९०.युग्मम्।
९०. गिरे=गुरो; एध=वर्ध। ९१. वतंस=वतंसि। ९२. दुहितृ=दुहितुः।
९३. पृष्टाः=पृष्ट्वा; ते=तां अ.ना.; चेलु=चेरुः म.।
९४. हिमालय=हिमाचल; पुनः=पुरः व.; प्रेक्ष्य=प्राप्य, दृष्ट्वा, प्रेष्य; चास्मै=चास्य।
९५. कृच्छ्रा=कृत्स्ना; दगमय=दगणय। पुष्पिका : इति कुमारसम्भवे महाकाव्ये कालिदासकृतौ उमा / पार्वती / गौरी — प्रदानो १६ सेप्टेम्बर २००४—.

सप्तमः सर्गः
१. ॐ अथौष; ९०. श्रीं॥ ऐं नमः॥ अथौष; तिथौ=तनौ; जामित्र=यामित्र; सुताया=सुतायाम्।
२. गृहे गृहे=दिने दिने; रागात्=रोधत्।
३. काकी=कैः की; महाप=चतुष्प; भासा ज्व=भासोज्जव; णानां=णाङ्क ना.; रस्व=रं स्व व.म., रे स्व, रस्व; र्ग=र्गम्।

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं बभूव ।।४।।
अङ्काद् ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्ते ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं बभूव ।।५।।
मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफाल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः ।।६।।
सा गौरसिद्धार्थनिवेशवद्भिर्दूर्व्वाप्रवालैः प्रतिभिन्नरागम् ।
निर्नाभि कौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलञ्चकार ।।७।।
बभौ च संपर्कमुपेत्य बाला नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने संधुक्ष्यमाणेव शशाङ्कलेखा ।।८।।
तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभिमुखं व्यनैषुः ।।९।।
विन्यस्तवैदूर्यशिलातलेऽस्मिन्नाविद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयां सतूर्यमेनां स्नपयाम्बभूवुः ।।१०।।
सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ।।११।।
तस्मात् प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये क्लृप्तासनं कौतुकवेदिमध्यम् ।।१२।।
तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरोनिषण्णाः ।
भूतार्थशोभाऽऽह्रियमाणनेत्राः प्रसाधने सन्निहितेऽपि नार्यः ।।१३।।

धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तः—कुसुमं तदीयम् ।
पर्यक्षिपत् काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ।।१४।।
विन्यस्तशुक्लागुरु चक्रुरस्याः गोरोचनापत्रविभङ्गमङ्गम् ।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कन्तिमतीत्य तस्थौ ।।१५।।
लग्नद्विरेफं परिभूय पद्मं, समेघलेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ।।१६।।
कर्णार्पितो लोध्रकषायरूक्षे गोरोचनाक्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभाद् बबन्ध चक्षूंषि यवप्ररोहः ।।१७।।
रेखाविभक्तश्च विभक्तगात्र्याः किञ्चिन्मधूच्छिष्टविमृष्टरागः ।
कामप्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः ।।१८।।
पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्व्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ।।१९।।
तस्याः सुजातोत्पलपत्रकान्ते प्रसाधिकाभिर्नयने निरीक्ष्य ।
न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम् ।।२०।।
सा संभवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद् विहङ्गैरिव लीयमानैरामुच्यमानाऽऽभरणा चकासे ।।२१।।
आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव स्त्रीणां प्रियाऽऽलोकफलो हि वेषः ।।२२।।
अथाङ्गुलिभ्यां हरितालमार्द्रं माङ्गल्यमादाय मनःशिलाञ्च ।
कर्णावतंसामलदन्तपत्रं माता तदीयं मुखमुन्नमय्य ।।२३।।
उमास्तनोद्भेदमनुप्रवृद्धो मनोरथो यः प्रथमो बभूव ।
तमेव मेना दुहितुः कथञ्चिद् विवाहदीक्षातिलकं चकार ।।२४।।

---

४. एकैव=एकेव; चिरस्य=चिराय, चिरेण; ष्टेव मृ=ष्टेरमृ; आसन्न म. =उपोढ व.अ.ना.; ग्रहणेति=ग्रहणेव, ग्रहणेन; सितं=सिता अ.ना.।

५. मुङ्क्त=युङ्क्त; संबन्धि=सम्बन्ध व. ; कायतनं बभूव=कायनतां जगाम व., तदेकायतनं जगान। द्र. शृ.प्र. ३३.४३

६. लाञ्छनेन=लक्ष्मणेन व., लक्षणेन, लाञ्छनोत्थे; फाल्गु=फल्गु व.; शरीरे प्रति=शरीरे परि अ.ना.; ०स्त्रियो=प्रिया।

७. रागम्=शोभम् म.अ.ना.; निर्नाभि=उन्नाभि, उन्नीवि अ.ना., निर्भिन्न, निर्धौत; अभ्यङ्ग=उपोढ; बाणमभ्यङ्ग=बाणं प्रत्यङ्ग।

८. नवेन=नवेव, नवीन, विवाह ना.; लेखा=रेखा; संधुक्ष्यमा= संधुक्षयन्तीव, संधुक्षमाणेव। बहुलावसानीयं बिम्बमुपमेये मृग्यम्।

९. लोध=रोध; हृता=हता, धृता, कृता; कालेय=कालीय; मुखं=मुखीम्; व्यनैषुः=मनैषुः, मकुर्वन्।

१०. शिलातलेऽस्मिन्=शिले च तस्मिन् व.; आविद्ध=बावद्ध म., आयुक्त, आरक्त, आमुक्त; मुक्ताफलभक्तिचित्रे=मुक्ताकृतभक्तिचित्रे, मुक्ताकृतभक्तिलेखे, मुक्तामणिभक्तिचित्रे, मुक्ताफलज्जालचित्रे/चित्रैः; तोयां=तोयाः व.।

११. पत्यु=प्रत्यु; छन्दोमञ्जरी संयुक्तपूर्व्वगुरुत्वविकल्पनिदर्शने। पत्युद्ग=शुद्धोद्ग, शुभ्रोद्ग व., वस्त्राद्ग ना.; वस्त्रा ना.=वस्त्रे, वस्त्रम् ना.; निर्वृत्यु ना.=निवृत्त, विसृष्ट; ऐका=षेकैः।

१२. तस्मात् प्र=ततः प्र; परिगृह्य=प्रतिगृह्य।

१३. तन्वीं=बालां ; व्यलम्बन्त=विलम्बेन; भूतार्थशोभा=भूतानुशोभा; ह्रिय=क्रि/श्रिय; नार्यः=सख्यः। द्र.ध्वन्यालोक ४.७।

---

१४. धूपोष्मणा त्याजित=धूपेन संत्याजित/ संमार्जित व.; पर्यक्षि=पर्याक्षि।

१५. विन्यस्त=आसक्त व., प्रसक्त, प्रसन्न अ.ना., प्रयुक्त, पर्यस्त; शुक्ला=कृष्णा, काला; गोरोचना=सरोचना व.; विभङ्ग=विभक्त म.आ.ना.; मङ्गम्=मस्याः।

१६. लग्न=लीन ना., सक्त; लेखं=लेशं व.ना., रेखं। प्रसिद्धौ ख्यातभूषिताविति। द्र. रघु.१८.४१, ध्वन्यालोक १.४ वृत्तिः।

१७. लोध्र=रोध्र व.; रूक्षे=रूषे नापा.., गौरे, रागे; नाक्षेप=नोद्भेद, न्यास, भेद व.अ.ना.; क्षेप=भङ्ग; परभाग=परिभाग; रोहः=रोहै;।

१८. रेखा=लेखा; च विभक्त=विभक्तः सु, प्रविभक्त, च पवित्र; मधूच्छिष्ट=मधूत्सृष्ट; विमृष्ट=विसृष्ट।

१९. रञ्जयित्वा=रञ्जयन्त्याः व.। ध्वन्यालोक ३.४०।

२०. निरीक्ष्य=समीक्ष्य अ.ना.; चक्षुषोः=चक्षुषः।

२१. लीयमानै=नीयमानै, गीयमानै; रामुच्यमाना=राबद्धयमाना, रारोप्यमाणा; भरणा=भरणैः; चकासे=चकाशे व.अ.ना.।

२२. बिम्बे स्ति=बिम्बस्ति; हरोपयाने त्वरिता=हरप्रयाणत्वरिता; हरोपयाने त्वरिता=हरोपयानत्वरिता व.; वेषः=वेशः।

२३. ङ्गुलि=ङ्गुलीद्ध; माङ्ग=मङ्ग व.अ.ना.; उन्नमय्य=उन्ननाम अ., उन्निनाय ना., उन्ममज्ज

२४. मनुप्रवृद्धो=मनुप्रवृत्तो; प्रथमो=प्रथमं म.अ.ना.; तमेव=तेनैव। तमेवेत्यशुद्धिमित्येके।

बबन्ध चास्राकुलदृष्टिरस्याः स्थानान्तरे कल्पितसन्निवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥ २५॥
क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥ २६॥
तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।
अकारयत् कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥ २७॥
अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरभाजा पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥ २८॥
इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः ॥ २९॥
तावद् वरस्यापि कुबेरशैले तत्पूर्व्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात् पुरशासनस्य ॥ ३०॥
तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।
स्व एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे ॥ ३१॥
बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥ ३२॥
शङ्खान्तरद्योति विलोचनं यदन्तर्निविष्टामलपिङ्गतारम् ।
सान्निध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ॥ ३३॥
यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥ ३४॥
दिवापि निष्ठ्यूतमरीचिभासा बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥ ३५॥

२५. चास्रा=सास्रा, बाष्पा; दृष्टिरस्या=दृष्टिरन्या, दृष्टिरेषा; धात्र्यङ्ग=धात्र्याङ्ग व.ना.; प्रति=प्रवि, परि; कौतक=कङ्कण; हस्तसूत्रम्=सूत्रहस्तम्।

२६. क्षीरोद=क्षारोद; नवक्षौ=नवं क्षौ; बभौ दर्पण=ऽप्यच्छप्रभं; दधाना=ददाना। नवं नवमिति पाठे क्षौमेण न सम्भवी सम्बन्धस्तस्य समासनिगीर्णत्वात्। ततश्चात्र द्वितीयस्य नवस्य दर्पणविशेषणत्वमेव समञ्जसतरम्। क्षौमनिवासिनी सा=क्षौममनुव्यधात् तां; मादधाना=मादधानाम्।

२७. माता=मेना; सतीनाम्=सखीनाम्।

२८. नम्रा इत्युच्यते स्मेत्यन्वयः। 'च्यते स्माऽऽभिरुमा नतास्ये' तिवक्तुमुचिततरम्। भिरुमा=भिरसौ; स्म नम्रा=सनम्रा; भाजा=लाभात् व.अ.ना.; पश्चात् म.=अधः; स्निग्ध=बन्धु।

२९. गमनप्रतीक्षः=गमनप्रतीक्षम्, गमनं प्रतीक्ष्य अ.ना.।

३०. वरस्या=हरस्या, भवस्या म.; पुर=स्मर व.।

३१. स्व एव=स एव म., स्वभाव अ.ना.; इष्टम्=इष्टो।

३२. सिता=कृता; भागेषु=भावेषु; गजाजिनस्यैव=गजाजिनं चैव, सिंहाजिनस्यैव अ.ना.।

३३. शङ्खा=नेत्रा, फाला, शृङ्गा; द्योति=ज्योति; पिङ्ग=गौर; श्यानल=श्यामल । ३४. करिष्य=गमिष्य॥

३५. मरीचि=मयूख, मनोज्ञ; भासा=भाजा अ.ना.; लाञ्छानेन=लक्षणेन व.अ.ना.; मणेः=मणौ व.; किंग्र=संग्र।

इत्यद्भुतैकप्रभवः प्रभावात् प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते खड्गे निषक्तप्रतिमं ददर्श ॥ ३६॥
स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्म्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलाशमिव प्रतस्थे ॥ ३७॥
तं मातरो देवमनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः पद्माकर चक्रुरिवान्तरिक्षम् ॥ ३८॥
तासां च पश्चात् कनकप्रभाणां काली कपालाभरणा चकासे ।
बलाकिनी नीलपयोदराजी दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९॥
ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्य्यघोषः ।
विमानशृङ्गाण्यवगाहमानः शशंस सेवावसरं सुरेभ्यः ॥ ४०॥
उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१॥
मूर्त्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥ ४२॥
तमन्वगच्छत् प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य संवर्धयन्त्या हविषेव वह्निम् ॥ ४३॥
एकैव मूर्त्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद् धाता तयोस्तावपि धातुराद्यौ ॥ ४४॥
तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५॥
कम्पेन मूर्ध्नः शतपत्रयोनिं, वाचा हरिं, वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान् सम्भावयामास यथाप्रधानम् ॥ ४६॥
तस्मै जयाशीः ससृजे पुरस्तात् सप्तर्षिभिस्तान् स्मितपूर्व्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्व्ववृता मयेति ॥ ४७॥

३६. इत्यद्भु=अत्यद्भु; प्रसिद्ध=स्वसिद्ध, उदार व.म.अ.ना.; नेपथ्य=नैपथ्य; विधेः=विधिः व.; खडगे=टङ्के अ.ना.; टङ्कः परशुरित्यमरः। निषक्त=नियुक्त, निषिक्त अ.ना., निविष्ट।

३७. चर्म्मान्तरितो=चर्म्मापिहितो।

३८. नक्षोभ=नाक्षोभ; तंसाः=तंसैः; प्रभामण्डल=चलत्कुण्डल; रेणु=रश्मि; पद्माकरं चक्रु=पद्माकरीचक्रु; रिक्षम्=रीक्षम्।

३९. राजी=राजि व.ना., पङ्क्ति; पुरः=परि; शतह्रदेव=तडिल्लतेव।

४०. विमान=सुमेरु, प्रसाद; ण्यव=णि वि, ण्यपि।

४१. ददे=दधे; नवं=स्वयं; दविदूर=दवभिन्न; पतद्गङ्ग इवोत्तमाङ्गे=वहन्/द् गाङ्गमिव प्रवाहम् व.म.अ.ना.।

४२. सहंसपाते=सहंसपूते, सहजस्रपाते।

४३. मन्वगच्छत्=मभ्यगच्छत्; प्रथमो=प्रथमं; संवर्ध=समेध व.; यन्त्या=यन्तौ व.म.; द्र शृङ्गारप्रकाशे ५.७७। एव=ऐव।

४४. सा=सौ; वरत्वम्=परत्वम्; रस्तस्य=रिस्तस्य; राद्यौ=रीड्यौ व.। अत्र हि ''हरेर्हरस्तस्य हरिः कदाचिद्धाते'' ति तु युज्यते वक्तुम्।

४५. लक्षणोत्सर्ग=लक्षणोत्सङ्ग, लाञ्छनोत्सर्ग; वेषाः=वेशाः व.; प्रणेमुः=विनेमुः।

४६. मूर्ध्नः=मूर्ध्ना; हणं=हरं; स्मितेन=स्मयेन; प्रधानम्=प्रभावम्, क्रमेण।

विश्वावसुप्राग्रहरैः प्रवीणैः संगीयमानत्रिपुरावदानः ।
अध्वानमध्वान्तविकारलङ्घ्यस्ततार ताराधिपखण्डधारी ॥ ४८ ॥
खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः ।
तटाभिघातादिव लग्नपङ्के धुन्वन् मुहुः प्रोतघने विषाणे ॥ ४९ ॥
स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्त्तात् ।
पुरोविलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृष्यमाणः ॥ ५० ॥
तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गादासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥
तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्त्ती ।
प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥
वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥
ह्रीमानभूद् भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्व्वं महिम्ना स हि तस्य दूरमावर्जितं नात्मशिरो विवेद ॥ ५४ ॥
स प्रीतियोगाद् विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन् मन्दिरमृद्धमेनमागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥
तस्मिन् मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥
आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न संभावित एव तावत् करेण रुद्धोऽपि च केशपाशः ॥ ५७ ॥
प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादालक्तकाङ्कां पदवीं ततान ॥ ५८ ॥

४८. हरैः=सरैः अ.ना.; वदानः=पदानः व.अ.ना.; ताराधिप=तारापति।
४९. धुन्वन्=धून्वन् अ.ना.।
५०. लग्नै=विग्नै; कृष्यमाणः=कृष्यमाणम् व.अ.ना.।
५१. स्वबाणचिह्ना=स्ववाहवाहात्, स्ववाहवाह्या; वतीर्य=वतार्य; मार्गा=वाहा ।
५२. नाधिरूढै=नाभिरूढै; प्रतीतः=प्रहृष्टः; वृक्षैः=पुष्पैः।
५३. मिवौघौ=मिवौघः।
५४. वन्द्येन=नाथेन; दूरम्=दूरात् ना.।
५५. रमृद्धमे=रमेनमृद्धं; मागुल्फ=माङ्गल्य; पणमार्ग=णान्तरपुष्प; पुष्पम्=मध्यम्; मार्गपुष्पम्=पुष्पमार्गम्, पुष्पतल्पम्, पुष्पवर्षम्, पुष्पप्रकरावकीर्णम्, आरोपितपुष्पमार्गम्, कीर्णापणमार्गपुष्पम्=कीर्णाम्बरपुष्पमार्गम्, कीर्णान्तरमार्गपुष्पम्, गाढार्पितपुष्पमार्गम् व.म.ना.।
५६. तस्मिन्=असिमन्; मालासु=मार्गेषु; त्यक्तान्य=मुक्तान्य।
५७. सहसा=त्वरया; वेष्टन=वेष्टित; वान्त=वीत; बन्धुं=बद्धं म., बध्नेण; च=न व.; पाशः=हस्तः व.। द्र. रघु. ७.६
५८. प्रसाधि=प्रासाधि; आक्षिप्य=आकृष्य; उत्सृष्ट=उन्मृष्ट। द्र. रघुवंशं ७.७, समानमेव पद्यं प्रायः। अत्र पद्यान्तरम्—
स्तनन्धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित् पयसाऽगवाक्षात्॥
'प्रस्नापयन्ती पदवीं स्तनाभ्यां सिषेचे'' ति, 'संप्रस्नुताभ्यां पदवीं सिषेच काचित् स्तनाभ्यामि'' इति चात्र पाठभेदः।

विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं ययौ शलाकामपरा वहन्ती ॥ ५९ ॥
जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥
अर्धाचिता सत्वरमुत्थिताया: पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद् रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥
तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तरा सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ६२ ॥
तावत् पताकाकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वञ् ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥
तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥
स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाऽपि तप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥ ६५ ॥
परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥ ६६ ॥
न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥
अनेन सम्बन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
मूर्द्धानमालि! क्षितिधारणोच्चमुच्चैस्तरां वक्ष्यति शैलराजः ॥ ६८ ॥
इत्योषधीप्रस्थविलासिनीनां शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृत—लाजमुष्टिं हिमालयस्याऽऽलयमाससाद ॥ ६९ ॥

५९. नेत्रा=नेत्रम्। द्र. रघु.७.८।
६०. न्तरप्रे=न्तरे प्रे; 'प्रस्थाः००नीवीम्'=प्रस्थानभिन्नान— वबद्धनीविः अ.ना.; वासः=वस्त्रम्। द्र. रघु.७.९।
६१. अर्धाचिता=अर्धाञ्चिता; दुर्निमिते=दुर्निमितं/ ता/तुम्, दुर्नमिता/ ते। द्र. रघु.७.१०।
६२. गन्धगर्भै=गन्धिग/पर्णैः; सहस्रपत्रा=प्रफुल्लपद्मा; भरणा=वरणा अ.ना.। द्र.रघु.७.११
६३. प्रसाद=विमान; ज्योत्स्नाभिषेक=द्विगुणाभिषङ्ग, ज्योत्स्नाविताना; णद्युतीनि=णच्छवीनि अ.ना.।
६४. तमेकदृश्यं नयनैः=ताः शङ्करं दृष्टिभिरा; तामेकदृश्याम् व.म.अ. ना.; जग्मुः=जज्ञुः, जक्षुः; तदाहि=तथाहि; शेषे=सर्वे; सर्वात्मना चक्षुरिव प्रविष्टा=विनोपघातेन जडी/खिली—बभूव अ.ना.। द्र. रघु. ७.१२। ६५. दुश्चर=दुष्कर; पेलवया=पेशलया, कामलया; पि तप्तम्=भितप्तम्; दास्य=हास्य।
६६. शोभम्=रूपम्, शोभनम्; विफलो=वितथो व.अ.ना.। द्र.रघु. ७.१४।
६७. व्रीडा००म=व्रीडा/ला—वशादेन अ.ना.; मुदीक्ष्य, मवेक्ष्य म.; संन्यस्त=स न्यस्त म.।
६८. उपेत्य=अवाप्य अ.ना.; मूर्द्धा००च्चमु=मूर्धानमाक्रम्य महीधराणामु; तरां=तरं म.।
६९. श्रोत्रसुखास्त्रिनेत्रः=श्रोत्रमनोऽभिरामाः; त्रिनेत्र=गिरीशः; केयूर=कर्पूर; चूर्णी=चूर्णैः; लाज=राज; मुष्टिं=वृष्टिं, वर्षम्, मार्गम्, मुच्चै; हिमालयस्यालयमाससाद=संबन्धिनः सद्म समाससाद।

तत्रावतीर्याच्युतदत्तहस्तः शरद्घनाद् दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥
तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्यालयमभ्यगच्छन् प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥
तत्रेश्वरो विष्टरभाग् यथावत् सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं प्रत्यग्रहीत् सर्वममन्त्रवर्जम् ॥ ७२ ॥
दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥
तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुः—कुमुदः कुमार्या ।
प्रफुल्लचेतः—सलिलः शिवोऽभूत् संसृज्यमानः शरदेव लोकः ॥ ७४ ॥
तयोः समापत्तिषु कातराणि किञ्चिद् व्यवस्थापितसंहतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ ७५ ॥
तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्त्तिः ।
उमातनौ गूढतनोः स्मरस्य तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६ ॥
रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ ७७ ॥
प्रयुक्तपाणिग्रहणं यदन्यद् वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥
प्रदक्षिणप्रक्रमणात् कृशानोरुदर्च्चिषस्तन्मिथुनं चकासे ।
मेरोरुपान्तेष्विव वर्त्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

सन्नपक्षे मुष्ट्यादीनि विशेषणान्यपि नपुंसकान्येव वाच्यानि। ससाद=ससाद ॥ कुलकम्।

७०. तत्रा=ततो व.अ.ना.; कक्ष्या=कक्षा। द्र.रघु ७.१७।

७१. तमन्वगिन्द्र=सर्वे महेन्द्र; मभ्यगच्छन्=न्वगच्छन् अ.ना.; प्रशस्त=प्रशस्य, यशस्य व.अ.ना., प्रकृष्ट, यशः समारम्भ; वोत्तमार्थाः=वोत्तरार्थाः।

७२. अर्घ्य=अर्घम्; गव्यम्=हव्यम्; नवे दुकूले ००नीतं=नवं दुकूलं ००नीतं अ.ना.; वर्जम्=बाह्यम्, वन्ध्यम् व.।

७३. दुकूल=दुगूल ; वासाः व.=धारी अ.ना., वान् सोऽथ; रक्षैः=दक्षैः, पक्षैः, मुख्यैः; समीप=सकाशं; व.अ.ना.; स्फुट=सित; राजिः=राशिः अ.ना.। ऋतुसंहार १.२।

७४. प्रवृद्धा=विशुद्धा, विवृद्धा; संसृज्य=संस्पृश्य, संपच्य; मानः=माणः; लोक=सिन्धुः।

७५. 'तयो००तानि'='तयोरपाङ्गप्रविलोकितानि क्रियासमापत्तिनिवर्त्तितानि' यन्त्रणामानशिरे=यन्त्रणामन्वभवन्; मनोज्ञाम्=मुहूर्त्तम्।

७६. उमातनौ=उमात्मना; व.अ.ना., तच्छङ्किनः=तच्छङ्कितः।

७७. दुमायाः=त् कुमार्याः; स्विन्नाङ्गुलिः=चित्राङ्गुलिः; मनोभवस्य=मनोभवेन।

७८. दनयोः=दुभयोः; तदानीं=यदा यत्; रुभयस्य=र्मिथुनस्य; कथ्यते=कथ्यताम् व.।

७९. क्षिणप्र=क्षिणं प्र; चकासे=चकाशे, बभासे अ.ना.; ष्विव वर्त=न्ते परि अ.ना.; संसक्त=संयुक्त। पद्यमिदं वल्लभो न पठतीति नन्दर्गीकरभट्टः।

तौ दम्पती त्रिः परिणीय वह्निं कराग्रसंस्पर्शनिमीलिताक्षीम् ।
तां कारयामास वधूं पुरोधास्तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥ ८० ॥
सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद् वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥
तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद् बभूव ॥ ८२ ॥
वधूं द्विजः प्राह तवैष वत्से! वह्निर्विवाहं प्रति पूर्व्वसाक्षी ।
शिवेन भर्त्रा सह धर्म्मचर्य्या कार्य्या त्वया मुक्तविचारयेति ॥ ८३ ॥
आलोचनान्तं श्रवणे वितत्य पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्वणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥
ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५ ॥
इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥ ८६ ॥
वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि! वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्टमूर्त्तावाशास्यचिन्तास्तिमितो बभूव ॥ ८७ ॥
क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात् कनकासनस्थौ ।
जायापती लौकिकमेषितव्यमार्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥
पत्रान्तलग्नैर्जलबिन्दुजालैराकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥
द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥

८०. कराग्र=अन्योन्य म.अ.ना., अङ्गाङ्ग भृङ्गेण;; संस्पर्श=सम्पर्क, संसक्त, क्षीम्=क्षौ; तां=स व.म.अ.ना.; समिद्धार्चि=समृद्धार्चि; मोक्षम्=होमम्, मार्गम्। द्र. रघु.७.२५।

८१. सा=स; गन्धं=गन्धिं; संसर्पि=संस्पर्शि; शिखः=शिखम्। द्र. रघु. ७.२६।

८२. लेख=रेखः; लाञ्जन=लागुरुपत्र /गण्ड; राग=युग्म; मक्ष्णोः=मक्षिणी। द्र. रघु.७.२७।

८३. द्विजः=गिरिः ना.; तवैषं=स एष; वत्से=पुत्रि; पूर्व्व=कर्म्म व.म.अ. ना.; मुक्त=युक्त।

८४. नान्तं=नान्तात्; श्रवणे=श्रवणौ, श्रवसी; वितत्य=विवृत्य व.ना.; भवान्या=भवत्या; लोल्वण=लोलुन, लोल्लक; तापये=तप्तये, भेदये अ.ना., खेदये। द्र. रघु. ७.३३, शृ.प्र. ५.१०३।

८५. ध्रुवेण=शिवेन; दृष्ट इ=दृष्टामि; कण्ठी=कण्ठम्।

८६. प्रयुक्त=प्रसक्त।

८७. मूर्त्तावा=मूर्त्तेरा ना.।

८८. चारां=कारां, कारः; स्र=रन्त व.अ.ना.; वेदीं=वेदिं अ.ना.; एषितव्य=एषणीय, ईषितव्यं। द्र. रघु. ७.२८।

८९. लग्नै=लम्बै व.अ.ना.; जलबिन्दुजालै=जलसन्निपातै/वृन्दै/बन्धै व./वर्षैः अ.ना.; कृष्ट=क्रुष्ट ना.; फलजाल=फलभक्ति; कमलात=कलधौत।

९०. प्रयुक्तेन=प्रभूतेन; वधूं सुख=वधूमुख।

तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्॥९१॥
देवास्तदन्ते हरमूढभार्य्यं किरीटबद्धाञ्जलयो निपत्य।
शापावसाने प्रतिपन्नमूर्त्तेर्ययाचिरे पञ्चशरस्य सेवाम्॥९२॥
तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम्।
काले प्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति॥९३॥

अथ विबुधगणाँस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपति—कन्यामाददानः करेण।
कनककलशरक्षाभक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात्॥९४॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृतोत्क्षेपमीशः।
अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम्॥९५॥

इत्यष्टमूर्त्तिमहाकाव्ये कुमारसंभवे महाकविकालिदासकृतौ
पार्वती—परमेश्वरपरिणयो नाम सप्तमः बुद्धिसूर्यमूर्त्तिः सर्गः॥७॥

---

९१. बद्ध=बन्ध, भिन्न; ङ्गहारम्=ङ्गरागम्।

९२. बद्धा=जुष्टा, दष्टा व.अ.ना.; साने प्रति=सानप्रति व.अ.ना.; प्रतिपन्न=प्रतिलब्ध, प्रतिबद्ध।

९३. सायकानाम्=सायकस्य, सेवकानाम्; काले प्र=कालप्र म.; कार्य=काल व.ना., सिद्धिः। अतः परं पद्यम् —
अतः परं तत्र गिरीन्द्रनाथो यथाप्रधानं त्रिदिवेश्वराणाम्।
चकार रत्नैः पृथगर्हणां स मेनोपनीतैर्विधिवत् प्रणम्य॥
अत्रापि पाठभेदाः अतः=ततः व.; त्रिदिवे=त्रिदशे; नीतैः=नीतां व.।
अतः परं पञ्च पद्यानि —
देवेशसंपादितचारुमूर्त्तिस्तत्संसदि प्रादुरभूत् स कामः।
लक्ष्यीकृतं शङ्करमेव भूयो विध्यन् शरैः पुष्पमयैरमोघैः॥
तं प्रेक्ष्य चक्रीकृतचारुचापमत्यन्तसंभावितदेवकार्यम्।
ब्रह्मादयः साध्विति देवसंघाः प्रीत्या मुहुः प्राहुरिति स्तुवन्तः॥
पुष्पेषुमेतं च रतिर्विलोक्य पूर्वोक्तवाक्प्रत्ययकालजातम्।
हृत्प्रेमसंहर्षविमूढभावात् किं किं न कुर्यामिति नाभ्यजानात्॥
चेतोभवश्चाप्युपलब्धसंज्ञो वागीश्वरादीनभिवीक्ष्य देवान्।
बद्धाञ्जलिर्न्यस्तशरासनेषुर्भूमौ प्रणामेन ततः पपात॥
ते तं समुत्थाय कृतप्रणामं रतिं वियोगाभिकृशां च तेन।
संयोज्य पूजां प्रतिचक्रुरस्य सत्कार्मुकस्या००००॥

९४. ददानः=दधानः व.; रक्षाभक्ति=युक्तं भक्ति म., कक्षासक्ति, रक्षाशक्ति।

९५. तत्कृतोत्क्षेप=तत्कृताक्षेप म., तर्किताक्षेप; प्रमथ=प्रथम; मुख=सुख; कारै=हारै।

## ॥अष्टमः सर्गः॥

ॐ पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति।
भावसाध्वसपरिग्रहादभूत् कामदोहदमनोहरं वपुः॥१॥
व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका।
सेवते स्म शयने पराङ्मुखी सा तथापि रतये पिनाकिनः॥२॥
कैतवेन शयिते कुतूहलात् पार्वती प्रति मुखं निपातितम्।
चक्षुरुन्मिषति सस्मितं प्रिये विद्युदाहतमिव न्यमीलयत्॥३॥
नाभिदेशनिहितः सकम्पया शङ्करस्य रुरुधे तया करः।
तद्दुकूलमथ चाभवत् स्वयं दूरमुच्छ्वसितनीविबन्धनम्॥४॥
एवमालि! निगृहीतसाध्वसं शङ्करो रहसि सेव्यतां त्वया।
सा सखीभिरुपदिष्टमाकुला नास्मरत् प्रमुखवर्त्तिनि प्रिये॥५॥
अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम्।
वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ॥६॥
शूलिनः करतलद्वयेन सा सन्निरुध्य नयने हृतांशुका।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत्॥७॥
चुम्बनेष्वधरदानवर्जितं सन्नहस्तमदयोपगूहने।
क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम्॥८॥
यन्मुखग्रहणमक्षताधरं दत्तमव्रणपदं नखं च यत्।
यद् रतं च सदयं प्रियस्य तत् पार्वती विषहते स्म नेतरत्॥९॥
रात्रिवृत्तमनुयोक्तुमुद्यतं सा विभातसमये सखीजनम्।
नाकरोदपकुतूहलं ह्रिया शंसितुं च हृदयेन तत्वरे॥१०॥
दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।

---

अष्टमः सर्गः

१. पाणि=९०. ऐं नमः, ९०. ॐ अर्हं॥ पाणि; दोहद=दोहन, दौह्द व.म.अ.ना.; मनोहरं वपुः=सुखं मनोहरम् व.म.अ.ना.।

२. दधे=ददे; दवलम्बि=दविलम्बि।

३. कैतवेन=कैतवेषु ; शयिते=शयने; पार्वती=पार्वतीम्; प्रति मुखं=प्रतिमुखं व.; रुन्मिषति सस्मितं=रुन्मिषितमस्मितं; प्रिये=प्रियो ; विद्युदाहत=विद्युताहत, विहतं व., पिहितम्, विहितम्, विद्युता हत इव। एभिः पाठैर्निष्पन्नरूपः श्लोक एवंविधः—
कैतवेषु शयने कुतूहलात् पार्वती प्रतिमुखं निपातितम्।
चक्षुरुन्मिषितमस्मितं प्रिये विद्युतेव पिहितं न्यमीलयत्॥

४. सकम्पया=सशङ्कया; तया करः=करस्तया; तद्दुकूल= तन्नितम्बमथवाभवत् व.; चाभवत्=मभवत् तदा, मिव चाभवत्, मथ चाऽगलत्।

६. वीक्षितेन=वीक्ष्यते स्म, वीक्षणेन; परिगृह्य=परिवीक्ष्य।

७. मोघयत्नवि=मोघयत्यवि, मोघवृत्तिवि।

८. चुम्बनेष्व=चुम्बने त्व; दान=पान व.; सन्न=खिन्न, स्विन्न; हस्त=पाणि; मदयो=सदयो; गूहने=गूहनम्; प्रभोः=विभोः प्रियं प्रभोः=प्रभोः प्रियं, प्रियं सदा; भप्रतिकृतं=भं प्रतिकृतं; रतम्=कृतम्। द्र.रघु.१९.२७।

९. दत्त=दन्त,न्यस्त,दान,पान; नखं च=नखस्य; प्रियस्य तत्=हरस्य तत्; नेतरत्=नेतरम्।

प्रेक्ष्य बिम्बमनुबिम्बमात्मन: कानि कानि न चकार लज्जया ।।११।।
नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी समाश्वसत् ।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजन: ।।१२।।
वासराणि कतिचित् कथञ्चन स्थाणुना रतमकारि चानया ।
ज्ञातमन्मथरसा शनै: शनै: सा मुमोच रतिदु:खशीलताम् ।।१३।।
सस्वजे प्रियमुरोनिपीडिता प्रार्थितं मुखमनेन नाहरत् ।
मेखलाऽपनयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ।।१४।।
भावसूचितमदृष्टविप्रियं चाटुमत् क्षणवियोगकातरम् ।
कैश्चिदेव दिवसैस्तदा तयो: प्रेम रूढमितरेतराश्रयम् ।।१५।।
तं यथाऽऽत्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम् ।
सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैकनिर्वृति: ।।१६।।
शिष्यतां निधुवनोपदेशिन: शङ्करस्य रहसि प्रपन्नया ।
शिक्षितं युवतिनैपुणं तया यत् तदेव गुरुदक्षिणीकृतम् ।।१७।।
दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत् क्षतं मौलिचन्द्रशकलेन शूलिन: ।।१८।।
चुम्बनादलकचूर्णदूषितं शङ्करोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ।।१९।।
एवमिन्द्रियसुखस्य वर्त्मन: सेवनादनुगृहीतमन्मथ: ।
शैलराजभवने सहोमया मासमात्रमवसद् वृषध्वज: ।।२०।।
सोऽनुमान्य हिमवन्तमात्मभूरात्मजाविरहदु:खपीडितम् ।
तत्र तत्र विजहार संपतन्नप्रमेयगतिना ककुद्मता ।।२१।।
मेरुमेत्य मरुदाशुगोक्षक: पार्वतीस्तनपुरस्कृतान् कृती ।
हेमपल्लवविभङ्गसंस्तरानन्वभूत् सुरतमर्दनक्षमान् ।।२२।।

पद्मनाभचरणाङ्किताश्मसु प्राप्तवत्स्वमृतबिन्दवो नवा: ।
मन्दरस्य कटकेषु चाऽवसत् पार्वतीवदनपद्मषट्पद: ।।२३।।
वारणस्वनितभीतया तया कण्ठसक्तघनबाहुबन्धन: ।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदा: शशिप्रभा: ।।२४।।
तस्य जातु मलयस्थलीरतेर्धूतचन्दनलत: प्रियाक्लमम् ।
आचचाम सलवङ्गकेसरश्चाटुकार इव दक्षिणानिल: ।।२५।।
हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
खे व्यगाहत तरङ्गिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला ।।२६।।
तां पुलोमतनयाऽलकोचितै: पारिजातकुसुमै: प्रसाधयन् ।
नन्दने चिरमयुग्मलोचन: सस्पृहं सुरवधूभिरीक्षित: ।।२७।।
इत्यभौममनुभूय शङ्कर: पार्थिवं च दयितासख: सुखम् ।
लोहितायति कदाचिदातपे गन्धमादनगिरिं व्यगाहत ।।२८।।
तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्म्मचारिणीम् ।।२९।।
पद्मकान्तिमरुणत्रिभागयो: संक्रमय्य तव नेत्रयोरिव ।
संक्षये जगदिव प्रजेश्वर: संहरत्यहरसावहर्पति: ।।३०।।
सीकरव्यतिकरं मरीचिभिर्दूरयत्यवनते विवस्वति ।
इन्द्रचापपरिवेषशून्यतां निर्झरास्तव पितुर्व्रजन्त्यमी ।।३१।।
दष्टतामरसकेसरत्यजो: क्रन्दतोर्विपरिवृत्तकण्ठयो: ।
निघ्नयो: सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ।।३२।।

---

१०. विभातं=प्रभात अ.ना.; ह्रिया=रह: अ.ना., च=तु; 'शंसि००तत्वरे'='तत्परा च हृदयेन शंसितुम्'; तत्वरे=तत्परा।

११. दर्पणे च=दर्पणेषु; दर्शिनी=दर्शिनो; प्रेक्ष्य=वीक्ष्य; मनुबिम्ब=म् अनु बिम्ब, म् उपबिम्ब; कानि न=कानि च, कान्यपि अ.ना.; लज्जया=लीलया।

१२. परिभुक्तयौवनां=परिमुक्तदर्शनाम्; समाश्वसत्=समाश्वसीत् व.अ.ना.

१३. रतमकारि चा=पदमकार्यत व.म.अ.ना.; रतिदु:ख=रतदु:ख। स्मरणीयोऽत्र 'शर्वे पदं कारिते' कुमार.६.१४ इत्यादिषु सप्तमीप्रयोग:।

१४. पीडिता=पीडितम् व.अ.ना., पीडनम्; पनय=प्रणय व.म.अ.ना.।

१५. भाव=हाव; चाटुमत्=चाटु तत्क्ष, दार्ढ्यभाक्; तदा=तथा; तदा तयो:=तयोस्तदा, तयोरभूत्; रूढ=गूढ।

१६. मुख=सुख। १७. निधुवनो=निधुवरो।

१८. दष्ट=दद्म; मौलि=मूर्ध्नि; हस्त=पाणि; क्षतं=क्षणं।

१९. अलक=अलिक; दूषितम्=रूषितम् व.अ.; रोऽपि=रोऽथ; वाहिने=वादिने, वायवे।

२०. वर्त्मन:=चात्मन:; मासमात्र=मासमेक।

२१. अनुमान्य=अनुमन्त्य, अनुमत्य; पीडितम्=खेदितम्; संपतन्=संचरन्।

२२. मेरुमेत्य=मेरुमत्सु; दाशुगोक्षक:=दाशुवाहन: व.म.अ.ना.; पुरस्कृतान्=पुरस्कृत: म.अ.ना.; संस्तरान्=संस्कृतान्; मर्दन=तत्पर: व.म.; क्षमान्=क्षपाम् व.म.। तेन "सुरततत्पर: क्षपामि" ति पाठान्तरमत्रोन्नेयम्।।

२३. पद्मनाभ=पद्मनाम, पद्मराग व.म.ना.; चरणा=वलया; नवा:=नवान्; मन्दरस्य=मान्दरेषु; चाऽवसत्=चाभवत् अ.ना.।

२४. वारण=रावण व.म.; स्वनित=ध्वनित; घन=दृढ, मृदु म.अ.ना.; बन्धन:=बन्धनम्।
संनिधेर्ध्वनितस्येव स्वनितस्यात्रयुज्यते।
वारणो रावणस्थाने पठितुं शब्दकोविदै:।।

२५. रते:=रते व.म.अ.ना., तले; धूत=भूत; लत:=रस:, वन:; क्लमम्=श्रमम्; सलवङ्गकेसर:=सतुषारशीतल:; दक्षिणा=दर्दुरा।

२६. कराम्बुवि=कराम्बुज; खे व्यगा=सा वगा; णीमुमा=णीपय:; मेखला=मेखलम्।

२७. प्रसाधयन्=प्रसादयन्, प्रसाघयत्; वधूभिरीक्षित:=वधूनिरीक्षित:, वधूभिरैक्ष्यत अ.ना.।

२८. दयिता=वनिता अ.ना.; गिरिं=वनं ना., वनात् अ.; गिरिं व्यगाहत=वनान्यगाहत, वनान्यवर्त्तत व., व्यगाहयत्।

२९. तलाश्रय:=तलाश्रयी व., तलाशयां।

३०. मरुणत्रिभा=रुणान्तभा; संक्रमय्य=संगमय्य; प्रजेश्वर:=प्रजापति:।

३१. दूरयत्य=धूनयत्य, पूरयत्य; स्तव पितुर्व्र=प्रसवितुर् अ.ना.; व्रजन्त्यमी=पतन्त्यमी अ.ना.।

३२. त्यजो:=स्रजो:; विपरिवृत्त=विरहदीन; निघ्नयो:=भिन्नयो:; अन्तर=अम्बर।

स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् ।
आविभातचरणाय गृह्णते वारि वारिरुहबद्धषट्पदम् ॥३३॥
पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे! विवस्वता ।
दीर्घया प्रतिमया सरोऽम्भसां तापनीयमिव सेतुबन्धनम् ॥३४॥
उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपाः दष्टभङ्गुरबिसाङ्कुरा इव ॥३५॥
एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः ।
हीयमानमहरत्ययातपं पीवरोरु! पिबतीव बर्हिणः ॥३६॥
पूर्व्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव जातमेकतः ।
खं हतातपजलं विवस्वता भाति किञ्चिदिव शेषवत् सरः ॥३७॥
आविशद्भिरुटजाङ्गणं मृगैर्मूलसेक–सरसैश्च वृक्षकैः ।
आश्रमाः प्रविशदग्निधेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥३८॥
बद्धकोषमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्व्वमिव दातुमन्तरम् ॥३९॥
दूरमग्रपरिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥४०॥
सामभिः सहचराः सहस्रशः स्यन्दनाश्वहृदयङ्गमस्वरैः ।
भानुमग्निपरिकीर्णतेजसं संस्तुवन्ति किरणोष्मपायिनः ॥४१॥
सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः सन्निधाय दिवसं महोदधौ ॥४२॥
खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः ।
तत् प्रकाशयति यावदुद्गतं मीलनाय खलु तावतश्च्युतम् ॥४३॥
सन्ध्ययाऽप्यनुगतं रवेर्वपुर्वन्द्यमस्तशिखरे समर्पितम् ।
येन पूर्व्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥४४॥
रक्तपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि! भान्त्यमूः ।
द्रक्ष्यसि त्वमिति सन्ध्ययाऽनया वर्तिकाभिरिव साधु मण्डिताः ॥४५॥
सिंहकेसरसटासु, भूभृतां पल्लवप्रसविषु द्रुमेषु च ।
पश्य धातुशिखरेषु, भानुना संविभक्तमिव सान्ध्यमातपम् ॥४६॥
पार्ष्णिमुक्तवसुधास्तपस्विनः पावनाम्बुविहिताञ्जलिक्रियाः ।
ब्रह्म गूढमभिसन्ध्यमादृताः शु/सिद्धये विधिविदो गृणन्त्यमी ॥४७॥
तन्मुहूर्त्तमनुमन्तुमर्हसि प्रस्तुताय सवनाय मामपि ।
त्वां विनोदनिपुणः सखीजनो वल्गुवादिनि! विनोदयिष्यति ॥४८॥
निर्विभुज्य दशनच्छदं ततो वाचि भर्त्तुरवधीरणपरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥४९॥
ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्व्वमनुतस्थिवान् विधिम् ।
पार्वतीमवचनामसूयया प्रत्युपेत्य पुनराह सस्मितम् ॥५०॥
मुञ्च कोपमनिमित्तकोपने! सन्ध्यया प्रणमितोऽस्मि नान्यया ।
किं न वेत्सि सहधर्म्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥५१॥
निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु! पूर्व्वमुज्झिता ।
सेयमस्तमुदयं च सेवते तेन मानिनि! ममात्र गौरवम् ॥५२॥
तामिमां तिमिरवृद्धिपीडितां भूमिलम्बमिव संप्रति स्थिताम् ।
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ॥५३॥

---

३३. दन्तिनः=हस्तिनः; "आविभात००पदम्"="आविभाति शरणाय गच्छतः सान्ध्य/साध्यकर्म्मविषयेऽनुगृह्णते"; बद्ध=रुद्ध अ.ना., पत्र; अट्पदम्=लोचने, संपुटे।
३४. लम्बिना=लम्बिना; निर्मितं मितकथे=निर्मितं कथमिदं, निर्मितं मितकथं, नित्यनिर्मित–कथे; विवस्वता=विवस्वतः; दीर्घया=लब्धया; ऽम्भसां=ऽम्भसः।
३५. पङ्कगतिवाहितातपाः=पङ्कमितिव्वाहिताव्वाहिताततपा दंष्ट्रिणः, पङ्कविनिवारिताः।
३६. शिखरे=विवरे; गौर=बर्ह; मण्डलः=मण्डलम्, मण्डनम्, मङ्गल म. अ.ना.; हीयमान=क्षीयमाण।
३७. व्यक्त=लग्न; खं हता=संहता; शेषवत्=शोषवत् अ.ना.।
३८. आविशद्भि=आवसद्भि व.अ.ना., ङ्गणं=ङ्गणे, ङ्गनं; सेकसरसै=के–स/शर–रसैः; अग्निधेनवः=अग्निधेनयः, अग्न्यधेनव/ यः; ताग्नयः=ताश्रयः। अग्निधेनुर्नाम होमधेनुः।
३९. अन्तरम्=उत्तरम् अ.वा.।
४०. मग्र=मग्नि, मग्न व.अ.ना., लग्न म.; मेय=पेय; वारुणी=वारुणा; भानुना=भास्वता व.; तिलकेन=कुसुमेन, कुसुमेषु।
४१. स्यन्दनाश्व=स्यन्दनस्य, वन्दनैश्च; स्वरैः=स्वनैः व.म.अ.ना.; परि=विनि। ऊष्मपायिनो हि बालखिल्यादयो महर्षयः।
४२. सोऽयमानत=सोमयानत; धरै=रुहै; भुग्न=भग्न; महोदधौ= पयोनिधौ।
४३. खं प्रसुप्त=शङ्खसुप्त; संस्थिते=प्रस्थिते व.; उद्गतम्=उत्थितम्, उद्गतैः। 'यत् प्रकाशयति पूर्व्वमुत्थितं मीलनाय खलु तस्य मीलितम्' इति भावः।
४४. वपुः=पदं म.; वन्द्य=धर्म्य व., धर्म, वन्ध्य; पूर्व्वमुद=प्राक्तथेय म. अ.ना., तथैव; द्र. कुस. ४.४३; पुरस्कृता=परिष्कृता।
४५. सन्ध्ययाऽनया=वेलयानया अ.ना., सांध्यवेलया व.म., सन्धिवेलया, सिन्धुवेलया; वर्तिका=वृत्तिका, वर्णिका; साधु मण्डिताः=साधुवर्णिताः, साधुवर्त्तिताः अ.ना., साधुवर्णिताम् व.म.।
४६. धातुशिखरेषु=चास्तशिखरेषु; अु भानुना=अु चात्मना, अु चात्मनः, अु भास्वता, विवस्वता।
४७. 'पार्ष्णिमुक्तवसुधा'='अद्रिराजतनये!"; विहिता=रचिता म.अ. ना., सरसा व.; मभि=मति; सन्ध्य=सान्ध्य; सिद्धये=शुद्धये। गूढं ब्रह्म गायत्रीमन्त्रः। सिद्धिपदं बह्वर्थसूचक शुद्ध्यपेक्षया न गुरु शुद्धेरेव गायत्र्यर्थत्वात्।
४८. मामपि=गां/तां प्रति।
४९. भुज्य=भज्य; महेतुकम्=सहेतुकम्।
५०. पूर्व्व=पूत; अनुतस्थिवान्=अनुतिष्ठतान्; मवचना=मवनता अ. ना., महवना; प्रत्युपेत्य=सोऽभ्युपेत्य; पुन=मुनि।
५१. प्रण=प्रय; तोऽस्मि नान्यया=तोऽस्मि नान्यथा म.अ.ना.; प्रणमितोऽहमन्यया व.; वेत्सि=वेद्मि व.; सम=मनु।
५२. उज्झिता=उत्थिता; उदयं च=उदये च; सेवते=सेव्यते म., गाहते व.। सेव्यत इति पाठे "अस्ते उदये च" इति पाठ्यम्। स एव चाधिकमुचितः। अस्तशब्दस्य प्रातिपदिकत्वं स्वीकृतचरमेव शृङ्गारप्रकाशदिषु।
५३. भूमिलम्बपदार्थस्याकारायामौ कीदृशाविति ज्योतिर्विदः प्रष्टव्याः।

सान्ध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् ।
संपरायवसुधा सशोणितं मण्डलाग्रमिव तिर्यगुज्झितम् ॥५४॥
यामिनीदिवससन्धिसंभवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने! विजृम्भते ॥५५॥
नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठत: ।
लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्त्तते निशि ॥५६॥
शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ् महत्त्वमसतां हतान्तरम् ॥५७॥
नूनमुन्नमति यज्वनां पति: शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि! पूर्व्वदिङ्मुखं केतकैरिव रजोभिरावृतम् ॥५८॥
मन्दरान्तरितमूर्त्तिना निशा लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता श्रोष्यतेव वचनानि पृष्ठत: ॥५९॥
रुद्धनिर्गमनमादिनक्षयात् पूर्व्वदृष्टतनु चन्द्रिकास्मिता ।
एतदुद्गरति चन्द्रमण्डलं दिग्रहस्यमिव रात्रिचोदिता ॥६०॥
पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोऽम्भसा ।
विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥६१॥
शक्यमोषधिपतेर्नवोदया: कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसम्पुटै: करा: ॥६२॥
अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभि: ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥६३॥
पश्य पार्वति! नवेन्दुरश्मिभि: सामिभिन्नतिमिरं नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषितं संप्रसीददिव मानसं सर: ॥६४॥
रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डल: ।
विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥६५॥
उन्नतेषु शशिन: प्रभा स्थिता निम्नसंश्रयपरं निशातम: ।
नूनमात्मसदृशी प्रकल्पिता वेधसेह गुणदोषयोर्गति: ॥६६॥
चन्द्रपाद-जनित-प्रवृत्तिभिश्चन्द्रकान्त-जलबिन्दुभिर्गिरि: ।
मेखलातरुषु निद्रितानमून् बोधयत्यसमये शिखण्डिन: ॥६७॥
कल्पवृक्षशिखरेषु संप्रति प्रस्फुरद्भिरविकल्पसुन्दरि!
हारयष्टिगणनामिवांशुभि: कर्तुमागतकुतूहल: शशी ॥६८॥
उन्नतावनतभागवत्तया चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तदन्तिन: ॥६९॥
एतदुच्छ्वसितपीतमैन्दवं वोढुमक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमानिबन्धनात् ॥७०॥
पश्य कल्पतरुलम्बि शुद्धया ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति चण्डि! केवलं व्यज्यते विपरिवृत्तमंशुकम् ॥७१॥
शक्यमङ्गुलिभिरुद्धृतैरध: शाखिनां पतितपुष्पपेशलै: ।
पत्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकान् ॥७२॥
एष चारुमुखि! योगतारया युज्यते तरलबिम्बया शशी ।
साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया वर: ॥७३॥

---

५४. मातपं=मापदं, मातरम्; लेख=शेष, रेख म.अ.न.; संपराय=सांपराय अ.व.; सशोणि=न शोणि; मण्डलाग्र=मण्डलीय, मण्डनाग्र; उज्झितम्=उत्थितम्,ऊर्जितम्, अर्पितम्।

५५. दन्ध=देव; निरङ्कुशं=निरर्गलं; विजृम्भते=विजृम्भिते।

५६. न चा=न वा; न पुरतो=न च पुर: अ.ना.; लोक एष-एष लोक; एष=एव; रौघ=रोल्ब व.म., रेण, राल्प, रोल्प; वेष्टितो=उत्थिते अ.ना.; वर्त्तते=तिष्ठते व।

५७. शुद्धमाविलमवस्थितं = निम्नमुन्नतमवस्थितं। महिमभट्टोद्धृत: पाठस्त्वत्र मूलतयाद्रियते समादृतपूर्वं शुद्धेति पाठं विहाय; चलं=जलं, चरं; धिङ्=दिङ्; हता=हता, मन।

५८. पति:=प्रिय: मुन्नमित=मुन्नयति; शार्वर=शारद, वामन ५.२.४९; पूर्वदिङ्मुखं=पश्य दिङ्मुखं, दिङ्मुखं यथा व.अ.ना. /तथा/हरे:; आवृतम्=आहतम् व.।

५९. मन्दरा=कन्दरा; सखीसमागता=सखीभिरावृता। ६०. तनु चन्द्रिका=तनुचन्द्रिका, मनु चन्द्रिका; स्मिता=स्मितम् व.म.; रात्रिचोदिता=रात्रिचोदितम्, चन्द्रमण्डलम्। पाठान्तरपाठ:—
रुद्धनिर्गमनमादिनक्षयात् पूर्व्वदृष्टतनुचन्द्रिकास्मितम् ।
एतदुद्गिरति चन्द्रमण्डलं दिग्रहस्यमिव रात्रिचोदितम्॥
द्र. अस्माकं लेख: सागरिकाया १९८४वर्षीयेऽङ्के प्रकाशित:।

६१. कृष्ट=कृत्त; विवरं=विषयं व., विधुरम्, विरहम्।

६२. शक्यम्=शक्य:; वामनस्य का.सू. ५.२.२२। दया:=दयात्, दिता:; तव=नवा:; छेत्तु=भेत्तु।

६३. गृह्य=यम्य व., रुद्ध्य, कृष्य; लोचनं=लोचने। वामनस्य का.सू. ४.३.३३।

६४. सामिभिन्न=सामभिन्न, ृयामभिन्न, संविभिन्न, भिन्नसान्द्र व., भग्नसान्द्र; स्तलम्=स्थलम्; दूषितम्=रूषितम्; संप्रसीददिव= सप्रसादमिव व.म.अ.ना., संप्रसादमिव।

६५. भाव=भाग; एष=एव!

६६. सदृशी=सदृशि अ.ना., सदृशो; वेधसेह=वेधसा हि, वेधसेव म. अ.ना., वेधसा ह; गति:=स्थिति:।

६७. त्तिभि=त्तय: व.; जल=मणि; बिन्दुभि:=बिन्दव: व.; गिरि:=गिरे:, गिरौ व.; निद्रिता=निर्वृता अ.ना.; नमून=निमान् अ.ना.; बोधयत्य=बोधयन्त्य व.।

६८. प्रस्फुरद्भि=संस्फुरद्भि; रविकल्पसुन्दरि=रवि पश्य सुन्दरि, रह पश्य सुन्दरि अ.ना., रिव शम्भुसुन्दरि व.म.; गणना=रचना; मागत=मुद्यत, मानत, माहत, मुद्यदेति स।

६९. भाग=भाव; सतिमिरा=सुतिमिरा; दन्तिन:=हस्तिन:।

७०. पीत=वीत; रसम्=सरम्; बोढु=सोढु व.अ.ना.; मुक्त=युक्त; मञ्जसा=मम्भसाम् अ.ना.।

७१. कल्पतरुलम्बि=कल्पकविलम्बि; शुद्धया=शुभ्रया; संशयम्=सञ्चयम्; चलति=चरति अ.ना.; चण्डि केवलं=चण्डिके बलं व.म.अ.ना., चण्डि केवले; व्यज्यते=युज्यते।

७२. रुद्धृतै:=रुत्थितै, रुद्यतै: व.; पतित=फलित; पेशलै:=कोमलै:; पत्रजर्जर=पत्रझर्झर, पत्रमञ्जलि; लवै:=चयै: व.; अलकान्=अलका:, अलकम् अ.ना.। वामनस्य ५.२.२२।

७३. चारु=चन्द्र, तार अ.ना.; योग=योग्य, पश्य; बिम्बया=नेत्रया; दीक्षया=दीक्षितो।

पाकभिन्न-शरकाण्ड-गौरयोरुल्लसत्प्रतिकृति-प्रसन्नयोः ।
रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्षि! चन्द्रिका ॥७४॥
लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रती स्वयम् ।
त्वामियं स्थितिमतीमुपस्थिता गन्धमादनवनान्तदेवता ॥७५॥
आर्द्रकेसरसुगन्धि ते मुखं मत्तरक्तनयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि! मदः करिष्यति ॥७६॥
मान्यभक्तिरथवा सखीजनः सेव्यतामिदमनङ्गदीपनम् ।
इत्युदारमभिधाय शङ्करस्तामपाययत पानमम्बिकाम् ॥७७॥
पार्वतीतदुपयोगसम्भवां विक्रियामपि सतां मनोहराम् ।
अप्रतर्क्यविधियोगनिर्मितामाम्रतेव सहकारतां ययौ ॥७८॥
तत्क्षणं विपरिवर्त्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्त्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥७९॥
घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥८०॥
तां विलम्बितपनीयमेखलामुद्वहन् जघनभारदुर्वहाम् ।
ध्यानसंभृतविभूतिभास्वरं प्राविशन्मणिशिलागृहं हरः ॥८१॥
तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥८२॥
क्लिष्टकेशमवलुप्तचन्दनं व्यत्ययार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभून्न तृप्तये ॥८३॥

केवलं प्रियतमादयालुना ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्परिगृहीतवक्षसा नेत्रमीलनकुतूहलं कृतम् ॥८४॥
स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।
मूर्च्छना-परिगृहीत-कैशिकैः किन्नरैरुषसि गीतमङ्गलः ॥८५॥
तौ क्षणं शिथिलितोपगूहनौ दम्पती चलितमानसोर्म्मयः ।
पद्मभेदपिशुनाः सिषेविरे गन्धमादनवनान्तमारुताः ॥८६॥
ऊरुमूलनखराजिमार्गणैस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वती प्रियतमामवारयत् ॥८७॥
स प्रजागर-कषाय-लोचनं गाढ-दन्तपद-ताडिताधरम् ।
आकुलालकमरंस्त रागवान् प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥८८॥
तेन भङ्गिविषमोत्तरच्छदं मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम् ॥८९॥
स प्रियामुखरसं दिवानिशं तर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदितः ॥९०॥

समदिवसनिशीथं सङ्गिनस्तत्र शम्भोः
शतमगमदृतूनां सार्धमेका निशेव ।
न तु सुरतसुखेषु च्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलेषु ॥९१॥

इत्यष्टमूर्त्तिमहाकाव्ये कुमारसंभवे महाकविकालिदासकृतौ
पार्वतीपरमेश्वरसामरस्यो नाम अष्टमश्चरमश्च यजमानमूर्त्तिसर्गः॥८॥

---

७४. भिन्न=पाण्डु; प्रतिकृति=प्रकृतिज; प्रसन्नयोः=प्रपन्नयो, प्रसादयो, प्रदीप्तयो म.; लेखयो=रेखयो अ.ना.; निहिताक्षि=निहिताक्षिण, वदनेऽद्य।

७५. लोहि=रोहि; मतीम्=मती व.; उपस्थिता=उपागता, समागता व.; नान्त=नाभि।

७६. आर्द्र=पद्म; मत्तरक्त=मत्तमत्त व.अ.ना., रक्तमत्त, प्रान्तरक्त, रक्तमेव म., मत्तमेव; अत्र=तत्र; मदः=मधुः म.।

७७. मान्य=मान; दीपनम्=दीपकम्; मम्बिकाम्=मङ्गनाम् अ.ना., मम्बिका।

७८. योग=भोग व.; सतां अ.ना.=सखीं व., सती०,सखी०; हराम्=भवाम्; माम्रते=नम्रते म.; कार=करि।

७९. तत्क्षणं=तत्क्षणे; विपरिवर्त्तितह्रियोः=विपरिवृत्तलज्जयोः; नेष्यतोः= शिष्यतोः,शिक्षतोः, वाञ्छतोः; सा बभू=संबभू श्रृ.प्र.२२. २३५,३४.१९४.; वशवर्त्तिनी=वशवर्त्तिका; शूलिनः=प्रेयसः व.।

८०. नयनं स्ख=नयनख:; लत्कथं=लत्कचं, लद्वचः, लत्पदम् श्रृ.प्र. ३४.१९५.; बिन्दुमदकारण=स्वेदबिन्दु मदकारण व.।

८१. संभृत=संभृति, संभव व.म.अ.ना.; भास्वरं=शोभितं; ईश्वरः,गौरवः, भास्वरं अ.ना., संभृतं म., गोचरं व.; हरः=रहः, हरेः,ततः।

८३. केशम—व/भि/ति/वि—लुप्त; व्यत्ययार्पितनखं समत्सरम्=व्यस्त. चन्द्रमदयैः कचग्रहैः म.अ.ना., हृत्पथार्पितनखं व., उत्पथार्पितनखं म.अ.ना., व्युत्पथार्पितनखं, न च्युतार्पितनखं; नखक्षतं च यत्; भून्न तृप्तये=भूदतृप्तये म.अ.ना.।

८४. केवलं प्रिय=केवलप्रिय; परि=प्रति।

८५. बुधस्तवोचितः=तया निशाक्षये म.; शातकुम्भ=शातकौम्भ व.; समम्=सह; कैशिकैः, द्र. रघुवंशे ५.६५—७५.८६ मेघ. ३१, ३३, ८७।

८६. शिथिलितो=प्रशिथिलो; चलित=रचित म.अ.ना.; भेद=बोध; मारुताः=वायवः।

८७. मूलनख=लग्ननख; मार्गणैः=पङ्क्तिभिः; क्षणं=क्षणे; संयमं=सञ्चयं; मवा=न्यवा।

८८. लोचनम्=लोचनः; पद=परि; पीडिता=ताडिता, कारिता, दारिता अ.ना.; आकुला=व्याकुला; 'मरंस्त००मुखम्'='मरंस्त रङ्गवान्००मुखम्'; 'लकमपास्तचित्रकं वीक्ष्य तृप्तिमभजन्न तन्मुखम्।

८९. भङ्गि=भङ्ग अ.ना., पिण्डित=खण्डित; पिण्डितविसूत्र=मण्डित/ पीडित—वितस्त।

९०. मुख=सुख; रसं=रतं, तर्ष=हर्ष म., तत्र, तस्य; राग; जननं=जनकं अ.ना.; सिषेविषुः=निषेविषुः; निवेदितः=निवेदनात् व.।

९१. सार्धम्=साग्रम्, सायम्, सारम् व.; जलेषु=जलेभ्यः, जलौघैः म.।
अतः परं नवीनं पद्यम् —
अथो शिवश्चन्द्रसुचारुमौलिः, सस्मार तत्राऽमरशिल्पिरलम् ।
चिकीर्षयाऽगारवरस्य विष्णुर्मायां नु संसारसिसृक्षयेव ॥
१—७ सर्गश्लोकसंख्या ५२२ + ९१=६१३ + प्रक्षिप्ताः १०=आहत्य ६२३।